# सौन्दर्यदर्शनविमर्शः

कुलपतेः श्रीवेङ्कटाचलस्य 'शिवसङ्कल्प'- पुरोवाचा पुरस्कृतः



प्रणेता सम्पादकश्च
आचार्यश्रीगोविन्दचन्द्रपाण्डेयः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी

ĀCĀRYABADARĪNĀTHAŚUKLA-SMṚTI-
GRANTHAMĀLĀ
[ Vol. 3 ]

# SAUNDARYADARŚANAVIMARŚAḤ

*BY*

**ĀCĀRYA ŚRĪ GOVINDACANDRA PĀṆḌEYA**
Ex-Professor & Head,
Department of Ancient Indian History & Culture,
Gorakhpur, Rajasthan, Allahabad Universities
Ex-Vice-Chancellor,
Rajasthan & Allahabad-Universities

*FOREWORD BY*

**PROF. V. VENKATACHALAM**
VICE-CHANCELLOR



VARANASI

1995

Research Publication Supervisor—
**Director, Research Institute,**
Sampurnanand Sanskrit University,
Varanasi.





Published by—
**Dr. Harish Chandra Mani Tripathi**
Publication Officer,
Sampurnanand Sanskrit University,
Varanasi-221 002.



Available at—
**Sales Department,**
Sampurnanand Sanskrit University,
Varanasi-221 002.



First Edition—500 Copies
Price Rs. 90.00



*Printed by—*
**Ratna Printing Works**
B-21/42 A, Kamachha,
Varanasi-221 010.

आचार्यबदरीनाथशुक्लस्मृति-ग्रन्थमाला

[ तृतीयं पुष्पम् ]

# सौन्दर्यदर्शनविमर्शः

कुलपतेः श्रीवेङ्कटाचलस्य 'शिवसङ्कल्प'- पुरोवाचा
पुरस्कृतः


प्रणेता

**आचार्यश्रीगोविन्दचन्द्रपाण्डेयः**

आचार्यचरः,
प्राचीनभारतीयेतिहास-संस्कृतिविभागस्य
गोरखपुर-राजस्थान-प्रयागविश्वविद्यालयानाम्
कुलपतिचरश्च,
राजस्थान-प्रयागविश्वविद्यालययोः






**वाराणस्याम्**

२०५२तमे वैक्रमाब्दे १९१७तमे शकाब्दे १९९५तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः –
**निदेशकः, अनुसन्धानसंस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी ।



प्रकाशकः –
**डॉ. हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी–२२१ ००२.



प्राप्तिस्थानम्–
**विक्रय-विभागः,**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी–२२१ ००२.



प्रथमं संस्करणम्, ५०० प्रतिरूपाणि
मूल्यम्–९०=०० रूप्यकाणि



मुद्रकः –
**रत्ना प्रिंटिंग वर्क्स**
बी. २१/४२ ए, कमच्छा,
वाराणसी–२२१ ०१०.

# शिवसङ्कल्पः

सर्वशक्तेर्भगवतो या विचित्रा उच्चावचा च सृष्टिस्तत्र परिमितानि कानिचिदेव सुन्दराणि, अपरे तु विपरीतानीति सर्वलोकानुभवः । अत एव लोकाः क्वचिच्छब्दस्पर्शरूपरसगन्धेषु रमन्ते, क्वचित् क्वचित्तद्विपरीतेभ्यः प्रतिकूलवेदनीयेभ्यो जुगुप्सन्ते, भूयिष्ठासु च सृष्टिसु सर्वथा ताटस्थ्यमिव भजन्ते, न तत्र रमन्ते, न वा परिजिहीर्षया ततः पलायन्ते । **'पुण्यो गन्धः पृथिव्यां च'** इति वदता भगवता स्वयंप्रदत्त एव स्वहस्तः सुन्दरासुन्दरयो-र्भेदप्रमाणीकरणे गन्धोपलक्षितायां समग्रायामेव सृष्टौ । अत्रेदमवधेयम्– तदिदं सौन्दर्यं नामरूपात्मकसर्गमध्ये न विश्राम्यति रूपात्मके जगति केवलं, किन्तु व्याप्नोति नामात्मकं जगदपि तथैव । अत एव भगवती वागपि दिव्यमदिव्यं चेत्युभयं रूपं बिभ्रती रमणीयमरमणीयं च रूपं धारयन्ती सर्वस्मै लोकाय तिष्ठते ।

यद्यपि सर्वे लोकाः प्रातिस्विकवासनाबलेन जगति सौन्दर्यमनुभवन्त्येव निश्चप्रचम्, तादृशेन च लोकोत्तरेणास्वादेन मुहुर्मुहुर्नन्दन्ति, हृष्यन्ति, माद्यन्ति च, तथापि न सर्वे विवेक्तुं क्षमन्तेऽस्यालौकिकस्य सौन्दर्यस्य रहस्यम् । न सर्वे कर्तारः स्रष्टारो वा भावुका भवन्ति, न वा सर्वे भावका भवन्ति विवेचकाः । ये केचिद् धन्याः सौन्दर्यभावका विवेचका अपि भवन्ति, तैरेवेदं प्रवर्तितं सौन्दर्यशास्त्रं नाम । पाश्चात्त्यदेशीयैस्तु विमर्शकैः पृथक्तया सौन्दर्यशास्त्रमेकं विकासितमित्यन्यदेतत् । पृथक् शास्त्रान्तररूपेण यद्यपीदं न प्रतिष्ठामुपनीतं भारतीयैश्चिन्तकैस्तथापि भारतीयं सौन्दर्यदर्शनं सर्वथा न हीयते पाश्चात्त्यादिदेशान्तरीयस्य सौन्दर्यदर्शनस्येति साधु निरूपितमेवास्मिन् ग्रन्थे । एतद्ग्रन्थकर्तृभिश्च डॉ. **गोविन्दचन्द्रपाण्डेयमहाभागैः** परमगम्भीर-प्राचीनभारतीयचिन्तनपथेषु अर्वाचीनपाश्चात्त्यदार्शनिकपथेषु च यथाकाम-सञ्चारिभिरुभयसारसम्मेलनेनास्मिन् ग्रन्थे सौन्दर्यतत्त्वास्वादे कश्चनापूर्वः

षाडवरसः समुपहृतः पाठकानामिति स्वसंवेद्यो भविष्यत्येतद्ग्रन्थगाम्भीर्यास्वादनचणानां सहृदयानाम् ।

तदिदं सौन्दर्यं न वस्तुनिष्ठं किन्तु प्रमातृनिष्ठमेवेत्यातिष्ठन्ते केचित् । अस्मिन् विषयेऽपि पराक्रान्तमेवाचार्यपाण्डेयमहाभागैस्तत्र तत्र । यत्र च तैर्लेखनी व्यापारिता तत्र नास्त्यन्यस्य व्यापारप्रसक्तिरिति जानानस्तद्दर्शितेनैव पथा सञ्चरमाणः प्राचीनैर्भारतीयैश्चिन्तकभावुकैः संग्रथितान् कांश्चिदर्थानिह सङ्केतरूपेण संक्षेपतः प्रस्तौमि सहृदयमनःप्रीतये ।

(१) सेयं सैन्दर्यानुभूतिर्यद्यपि विधातृसृष्टिशेखरीभूतेषु मनुष्येषु प्रतिष्ठितैव तथापि न मानवमात्रनिष्ठेयमित्यमंसत भारतीया दार्शनिका इति प्रतिभाति । तत्रेदं पशवादीनामपि स्वस्ववासनाबलेनानुभूयमानस्य सौन्दर्यस्य, तादृशानुभवजन्यस्य परस्परस्त्रीपुंससमाकर्षणस्य च कश्चिदस्ति सूक्ष्मः सङ्केतोऽस्मिन् अर्वाचीनकविकुलावतंसस्य नीलकण्ठदीक्षितस्य पद्ये–

**श्वानः पुच्छाञ्चलकुटिलतां सूकराः कुक्षिपोषं**
**कीशा दन्तप्रकटनविधिं गर्दभा रूक्षघोषम् ।**
**मर्त्या वक्षः श्वयथुमपि च स्त्रीषु दृष्ट्वा रमन्ते**
**तत्सौन्दर्यं किमिति फलितं तत्तदज्ञानतोऽन्यत् ॥**

वैराग्योद्दीपनाय शान्तिविलासाख्ये खण्डकाव्ये स्थितं पद्यमदसीयं न सौन्दर्यविवेचनोद्देश्येन प्रवृत्तमित्यन्यदेतत् । पुंयोनिषु जातानां नानापशूनां सौन्दर्यानुभवप्रकाराः कथं नाम भिद्यन्त इति, पशूनां स्वस्त्रीषु कामवासनोद्दीपनस्थानान्यङ्गानि कानि कानीति च निर्दिशंस्तत्तत्सौन्दर्यस्य प्रमातृनिष्ठतामिह कटाक्षयति दार्शनिककवितल्लजोऽयमिति विदाङ्कुर्वन्तु पण्डितसहृदयाः ।

(२) काश्मीराभिजनस्य वाराणस्यां स्वीकृतक्षेत्रसंन्यासस्य लोष्टदेवस्य 'दीनाक्रन्दन'-स्तोत्रस्थमिदं पद्यमपि विशेषतो रमणीयं मन्ये सौन्दर्यस्य प्रमातृमात्रनिष्ठत्वनिरूपणप्रसङ्गे । शिवभक्तोऽयं पारमेश्वरे रूपे प्रतिष्ठितं महाजनदृष्ट्या प्रतीतमसौन्दर्यमपि सुन्दरं पश्यन् तस्मा एव स्पृहयति, न तु वैष्णवाय नैककल्याणोज्ज्वलाय रूपसौन्दर्याय–

**दिव्योत्तरीयभृतिकौस्तुभरत्नभाजि**
**देवेऽपरे दधतु लुब्धधियोऽनुबन्धम् ।**
**रूपं दिगम्बरमखण्डनृमुण्डचूडं**
**भावत्कमेव तु बतेश मम स्पृहायै ॥**

(३) सौन्दर्यं कुत्रापि परिनिष्ठते वस्तुप्रकार एव न प्रतिष्ठितमिति सौन्दर्यरहस्यं सम्यक् प्रत्यपादि दशरूपकस्यान्त्ये प्रसिद्धेऽस्मिन् पद्ये यत्रालङ्कारिकोऽयं कविभावकभाव्यमानं विपरीतं वस्तु अवस्तु चोभयं सौन्दर्यनिधानमाचष्टे—

**रम्यं जुगुप्सितम्, उदारमथापि नीच-**
**मुग्रं प्रसादि, गहनं विवृतं च वस्तु ।**
**यद्वाप्यवस्तु कविभावकभाव्यमानं**
**तन्नास्ति यन्न रसभावमुपैति लोके ॥**

(४) प्राचीनालङ्कारिकेषु प्राप्तप्रतिष्ठो भामहोऽपि स्वीयां सौन्दर्यदृष्टिं दृष्टान्तैर्व्याचिख्यासुः स्पष्टमेवासुन्दरस्यापि वस्तुनः कारणविशेषैः सौन्दर्यं प्रतिजानीते प्रथमपरिच्छेदोपसंहारे—

**सन्निवेशविशेषात्तु दुरुक्तमपि शोभते ।**
**नीलं पलाशमाबद्धमन्तराले स्रजामिव ॥**
**किञ्चिदाश्रयसौन्दर्याद्धत्ते शोभामसाध्वपि ।**
**कान्ताविलोचनन्यस्तं मलीमसमिवाञ्जनम् ॥**

(५) असुन्दरेष्वपि शब्देषु महाकवयः परमं सौन्दर्यविशेषमादधिरे इति भारतीयैरालङ्कारिकैर्बहुधा प्रपञ्चितमेव । "निःश्वासान्ध इवादर्शः" इत्यत्रादिकविना वाल्मीकिना, "स्थिताः क्षणं पक्ष्मसु ताडिताधराः" इत्यत्र कालिदासेन च सौन्दर्यस्पर्शहीना अपि 'अन्ध-ताडिता'दयः शब्दाः परां काष्ठामारोपिताः शब्दसौन्दर्यस्येति दिक् ।

आचार्यवर्यैः डॉ. पाण्डेयमहाभागैः प्राच्यपाश्चात्त्योभयसंस्कारसौष्ठवं कक्षीकुर्वद्भिरस्मिन् ग्रन्थे भारतीयपूर्वाचार्यपद्धत्या ये परिकरश्लोकाः संदृब्धास्तेषु किमप्यसाधारणं सौन्दर्यं प्रत्यक्षीकरिष्यन्ति पाठकाः । यद्यपि

सर्वमेव तद् भूयसा रमणीयं स्पृहणीयं च तथापि स्थालीपुलाकन्यायेन किञ्चिदुदाहरामि–

**( १ ) दृश्यमाना विकल्प्यन्ते स्वतः स्फुरितया धिया ।**
**विषयाः, भाति सौन्दर्यमन्तर्बाह्यतया स्थितम् ॥**

**( २ ) सौन्दर्यबुद्धिः प्रथमं जायतेऽथ परीक्ष्यते ।**
**अन्वीक्ष्यते ततो न्यायात् त्रिपर्वा ज्ञानपद्धतिः ॥**

**( ३ ) अद्वैतं दर्शनं श्रौतं कालभेदाविभेदितम् ।**
**आभासो देवदेवस्य विश्वसौन्दर्यमिष्यते ॥**
**रूपे रूपे हि सङ्केतो लक्ष्यते परमेशितुः ।**
**व्यञ्जकत्वं तु तस्यैव रूपश्रीरभिधीयताम् ॥**

**( ४ ) शमप्रधानं बौद्धानां काव्यं प्रासादिकं तथा ।**
**रम्यत्वं प्रकृतेस्तत्र चित्तस्येव प्रभास्वरम् ॥**

इदमेवाहमाशासे यद् भारतीयपारम्परिकशास्त्रविवेचनमार्गेष्वप्रकम्प्यगतयोऽलङ्कारदर्शनादिशास्त्रेषु नदीष्णाः पण्डिता ग्रन्थमेनं सौन्दर्यशास्त्रविषये सर्वतोदिक्प्रसरं सर्वसामरस्योपबृंहणात्मकमनुसन्धायात्र प्रदर्शितान् नूतनानंशानवधार्य समीक्षन्तामिति । इदमपि प्रार्थये महाकविशब्दविपरिवर्तनेन–

**पौरस्त्यमित्येव न साधु सर्वं**
**न चापि पाश्चात्त्यतयैव दुष्टम् ।**
**सन्तः परीक्ष्यान्यतरद् भजन्ते**
**मूढःपरप्रत्ययनेयबुद्धिः ॥**

इति सर्वं शिवम् ।

**वाराणस्याम्**
गुरुपूर्णिमायाम्,
वि. सं. २०५२
(१२-७-१९९५)

**वि. वेङ्कटाचलम्**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# प्रास्ताविकम्

वर्षद्वयात्प्राक् लक्ष्मणपुरीयाखिलभारतीयसंस्कृतपरिषदः प्रो. के. एस. सुब्रह्मण्यशास्त्रिस्मृतिव्याख्यानार्थं निमन्त्रणेनानुगृहीतेन सौन्दर्यमीमांसामुद्दिश्य विद्वज्जनसमक्षं यन्मया किञ्चिदुपस्थापितं तदेवास्य निबन्धस्य बीजम्।

सत्स्वपि नाट्यादिलक्षणशास्त्रेषु रसादिसिद्धान्तप्रतिपादकेषु स्वतन्त्रं तत्त्वविवेचनात्मकं सौन्दर्यशास्त्रं किमिति प्राचीनकाले न व्यरचीति साम्प्रतिकैः परीक्षकैः सविस्मयमनुयुज्यते। अस्मादेव प्रश्नादस्य निबन्धस्य सूत्रपातो जातः। विद्यास्वरूपं विद्याविभागं च विमृश्य तदन्तर्भूतसौन्दर्यशास्त्रस्येतिहासपरतन्त्रता प्रथमेऽध्याये समालोचिता। सौन्दर्यबुद्धिः लक्ष्यापेक्षा जायते तन्मीमांसा च पुमर्थदृष्टिम् आन्वीक्षिकीं चापेक्षते। एवं देशकालभेदतो भिद्यमानेषु लक्ष्येषु विपरिवर्तमानासु च दृष्टिषु सौन्दर्यमीमांसावधारणमपि भिद्यत एव। तथापि शास्त्रव्यवस्थापकाः प्रत्ययाः परमार्थत आत्मस्वरूपावधारणप्रकारा एव, विंचारभूमौ व्यवहारभूमौ च ते स्वगतद्वन्द्वात्मकं विरोधं परिहृत्य पूर्णात्मबोधविश्रान्तिं पर्येषन्ते तथा च ऐतिहासिके काले अपरिनिष्ठितमपि समग्रं रूपं शास्त्रस्य क्रमेणादर्शयन्ति बहुभूमिकप्रासादगवाक्षजालानीव हिमवच्छिखराणाम्। तिस्रोऽत्र दृष्टिभूमिकाः प्राधान्यं भजन्ति प्रत्यक्षवादविज्ञानवादाध्यात्मवादपराः। ताश्चानुसरत्युभयविधा प्रतिभा कारयित्री भावयित्री च। ततश्च लक्ष्यलक्षणसिद्धान्तभेदा उपजायमानाः शास्त्रभेदमापादयन्ति।

प्रातिभकल्पनासृष्टरूपप्रतिभासः सहृदयविवेकसङ्गतरसास्वादश्चेति द्वौ पक्षौ सौन्दर्यबुद्धेः। द्वितीयेऽध्याये नानायुगविवर्ति-काव्य-शिल्प-सङ्गीतादि-व्यापक-रूप-कल्पनाभेदप्रदर्शनपुरस्सरं तत्संलग्ना विप्रतिपत्तीर्विचार्य व्यञ्जकत्वमेव परो रूपधर्म इति निरूपयितुमिष्टम्। तृतीयेऽध्याये परम-

व्यङ्ग्यार्थभूतरसविषयकसूत्रव्याख्यानानि संक्षेपेणानूद्य तदालोचनेन अभिनवगुप्तपादानां रसविवृतेः सामान्यतया समर्थनपूर्वकमपि तेषां भावनिरूपणं रससङ्ख्यानिर्धारणं च पुनर्विचारमर्हतीति ससाध्वसं निवेदयता इच्छा-प्रधानसंविदः साकारात्मपरामर्शविशेषत्वं भावस्य प्रतिपिपादयिषितम् ।

यद्यपि मीमांसामीमांसात्मके दर्शनविमर्शेऽस्मिन् बहवो नाम्ना अनुल्लिखिता अपि पूर्वसूरयो मे पथिकृतः, तथापि अभिनवगुप्तपादानामाभासवादः शर्मण्याचार्यप्रवरहेगेल-महानुभावानां च तर्कशास्त्रं मुख्यतयोपजीव्यभूते अस्य विवेचनस्य । उभयत्रापि विज्ञानवादालम्बनमेव आत्मबोधावाप्तेर्द्वारभूतम्, प्रतिभास-विकल्प-प्रत्यय-प्रतीक-सङ्केतादि-शब्दप्रयोगोऽपि अस्मिन्नेव सन्दर्भे बोद्धव्यः । क्वचिद् वचनसंक्षेपार्थं "मूल्य"-"संस्कृतीतिहास"शब्दा नवीनार्थेषु प्रयुक्ता इत्यप्यवधेयम् । संक्षेपार्थमेव चाङ्ग्लीय-**सिम्बल**-शब्द-पर्यायतया सङ्केतशब्दस्य क्वचित् प्रयोगः क्षन्तव्यः ।

प्रसरद्विद्वत्संवादेऽस्मिन् युगे नानादेशानां प्राचीनार्वाचीनसौन्दर्यतत्त्व-विचारसूत्राणामंशतः समन्वयः सम्भवतीति मन्यमानैः श्रीमदरविन्दकुमारस्वाम्यवनीन्द्रनाथ-कृष्णचन्द्रभट्टाचार्य-गोपीनाथकविराज-कान्तिचन्द्रपाण्डेयादिभिर्मनीषिभिः प्रवर्ततेऽस्मिन् कार्ये यद् विषयमहिम्ना चापलाय प्रचोदितोऽयं जनः तत्क्षन्तव्यमुदारचेतोभिः सुधीभिः स्वप्रतिभयैव दोषसंमार्जनसमर्थैः ।

**सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य** कुलपतिपदमलङ्कुर्वाणैराचार्यप्रवर-**वेङ्कटाचलमहाभागैः** विश्वविश्रुतकीर्तिभिरयं निबन्धः प्रकाशितो मण्डितश्च पुरोवाचेति चिरमुपकृतस्तिष्ठति विदुषामनुग्रहाकाङ्क्षी—

**प्रयागतीर्थे**
गुरुपूर्णिमायाम्,
वि. सं. २०५२

**गोविन्दचन्द्रपाण्डेयः**

# विषयानुक्रमणिका





आचार्यश्रीगोविन्दचन्द्रपाण्डेयप्रणीतः

# सौन्दर्यदर्शनविमर्शः

स्व. आचार्यबदरीनाथशुक्लव्याख्यानमालायाः

तृतीयं पुष्पम्

# सौन्दर्यशास्त्रस्वरूपालोचनम्

**सङ्गीते काव्यचित्रादौ रविचन्द्रोदयादिषु ।**
**लोकस्य रमते चित्तमालोच्यार्थं विलक्षणम् ॥ १ ॥**

**तद्धेतुर्दृश्यसौन्दर्यमक्षगोचरतां गतम् ।**
**अन्वीक्षमाणास्तच्छास्त्रमीस्थैटिकेतिसंज्ञितम् ॥ २ ॥**

**"वृक्षोद्याना"*भिधाचार्याः पृथगेव प्रणिन्यिरे ।**
**विद्यास्थानस्य तस्यैव तत्त्वमत्र विमृश्यते ॥ ३ ॥**

अद्यत्वे सुप्रथितं पाश्चात्त्येषु विपश्चित्सु आस्माकीनेष्वपि च परिशीलितपाश्चात्त्यशास्त्रेषु **ईस्थैटिक** इत्याख्यं नूतनं विद्याप्रस्थानं प्रथमतः बाउमगार्टन इत्याख्यैः शर्मण्यदेशीयैराचार्यैः क्रिस्ताब्दानामष्टादशे शतके प्रत्यपादि[1] । तदेव प्रायेण सौन्दर्यशास्त्रमित्यनूद्यते । शास्त्रस्यास्य मुख्यः प्रतिपाद्यो व्युत्पत्त्या ऐन्द्रियप्रत्यक्षास्वाद्यो विषयविशेषः, प्रवृत्त्या तु स्वलक्षणवद् अतुल्योऽनिर्वाच्यकल्पोऽपि समालोचनार्हः कश्चिद् अर्थाकारावच्छिन्नोऽतिशयविशेषः चमत्कारापरपर्यायः सौन्दर्याख्य इति वक्तुं शक्यते ।

**भारते न पुरा दृष्टा स्वतन्त्रपदमास्थिता ।**
**एषा विद्येति बहवो मन्यन्ते पण्डिताः खलु ॥ ४ ॥**

**विद्याविभागोऽनेकान्त इति नालोच्यते तु तैः ।**
**सापेक्षतापि विद्यानां दृष्टिसंस्कृतिहेतुका ॥ ५ ॥**

बहुत्र श्रूयते न सौन्दर्यमीमांसात्मिका विद्या भारतीयशास्त्रपरम्परायां क्वचिदुपलभ्यते नाट्यालङ्कारशिल्पसंगीतादिशास्त्रेषु सत्स्वपि तद्व्यापकतत्त्वानां दार्शनिकविचारविधया स्वतन्त्रशास्त्रत्वेन तत्राप्रतिपादनादिति; ।

---

*. बाउमगार्टन् इति शर्मण्यभाषायाम् ।

किन्त्वेते विद्वांसो विद्याविभागानामनैकान्तिकत्वे गजनिमीलिकामेवाचरन्ति । न हि सर्वेषु युगेषु देशेषु वा विद्याविभागः समान एव, नापि ते भिद्यमाना विभागाः समानप्रवाहपतिताः नापि विद्यापरम्परासु विकाससातत्यमविच्छेदो वा नित्यमुपलभ्यते । दृष्टिभेदात् सांस्कृतिकवासनाभेदाच्च विद्यास्वरूप-कल्पनास्तद्विभागाश्च नानात्वं भजन्ति ।

**एकमेव भवेच्छास्त्रं नाना वा देशकालतः ।**
**अभिन्नं वस्तुतन्त्रत्वात् समानविषयत्वतः ॥ ६ ॥**
**प्रमाणाश्रितविज्ञान-विद्यारूपतया तथा ।**
**सौन्दर्यदर्शनं नाम शास्त्रमेकं भवेन्ननु ॥ ७ ॥**

वर्तमानविद्याविभागमैकान्तिकम्, आधुनिकीश्च विद्याः श्रेष्ठा अपूर्वाश्च मन्यमानः प्रत्यवतिष्ठते । विद्या स्वरूपतो न पुरुषापेक्षा, नापि प्राचामपि मतेन शास्त्रं स्वप्रामाण्ये देशकालापेक्षं प्रत्युत सार्वभौमं सनातनं च । न हि मानवप्रज्ञार्जिता अपि ज्योतिर्विद्यादिसिद्धान्ता यावता ज्ञानरूपास्तावता कालात्यस्ता भवन्ति, आगन्तुकभ्रान्तय एव तत्र कालेन पुरुषप्रयत्नजन्याया विद्यावृद्धेरुत्सार्यन्ते । एवं च विद्या क्रमशो दोषेभ्यः परिष्कृता पर्यवदाततरा च भवति, आधुनिकं च तस्या रूपम् अद्यावधिकेतिहासे प्रामाणिकतमं मन्तव्यम् । एवमैकान्तिकात्यन्तिकज्ञानस्यानुपलब्धावपि दृश्यते समान-प्रवाहाभ्यन्तरीकृतविभेदं विद्येतिहासे विकासतारतम्येन शास्त्रैकत्वम् ।

पुनश्च ज्ञानस्य विषयतन्त्रत्वात् समानविषयज्ञानप्रतिपादकस्य तस्यैव शास्त्रस्य नानारूपाणि चेत् कल्प्यन्ते तत्र नानात्वहेतुर्वक्तव्यः । विषयैकदेशनियमनाद् दोषकृतवैविध्याद्वा विद्याया नानात्वं स्याद् यथा यूक्लिदीयायूक्लिदीयरेखागणितयोः टॉलमेयकोपर्निकीयखगोलविद्ययोर्वा । तथा सति भेदानुगतसामान्यविषयत्वात् परमं रूपं शास्त्रस्य सर्वभेद-सङ्ग्राहकं स्यात् । प्रमाणनिश्चिताबाधितत्वविषयत्वादपि शास्त्रैकत्वं निश्चीयेत । शास्त्रस्य आग्रहादिभिन्नयुक्तिसमाश्रयादपि तदेव निश्चेतव्यम् । विद्या तावत् परीक्षित-प्रमाणोपदर्शित-प्रविभक्त-व्यक्त-लक्षण-परिच्छिन्ना

निरस्तसंशयबाधा विषयतत्त्वप्रकाशिका । तत्प्रतिपादकत्वाच्छास्त्रम् एकरूपमेव भवितुमर्हति । विद्याभेदा अपि विषयभेदनिबन्धना न तात्त्विकमनैकान्तिकत्वं भजेयुः । एवं च साम्प्रतिकी प्रसिद्धिरपि ।

**सम्यक्प्रत्यक्षमाश्रित्य सुन्दरत्वं विचारयत् ।**
**न्यायेन बहुधा शास्त्रं दर्शयेदेकरूपताम् ॥ ८ ॥**
**पारम्पर्यप्रभेदास्तु दृश्यन्ते स्फुटमेव ये ।**
**प्रयोगविधिमूलास्ते रूढीनां वा समाश्रयात् ॥ ९ ॥**
**एकदेशविचाराद्वा प्रयोजनमपेक्ष्य वा ।**
**अथवा भूमिभेदात्ते ज्ञातव्या न तु सारतः ॥ १० ॥**

एवं च नैसर्गिकेषु दृश्येषु काव्येषु कलाकृतिषु च यो व्यापको विशेषो लक्ष्यते सौन्दर्याख्यः तस्य तत्त्वज्ञानप्रतिपादनपरेण प्रामाणिकेन शास्त्रेण एक- रूपेणैव भाव्यम् । न हि रसायनशास्त्र-सूत्राणि गणितसूत्राणि वा विपरिवर्तन्ते । तत्कथं तत्प्रतिपादकशास्त्राणि भिद्येरन् विषये प्रमाणव्यापारे चाविकृते । सम्यङ् निरीक्षितो न्यायतश्च परीक्षितो विषयः सम्यग्ज्ञानं जनयति, तन्निबन्धनं च शास्त्रम् । तत्प्रतिपादनशैली कामं भिद्यतां प्रतिपादनविस्तरो वा, न तु तत्सारं भिद्यते । न च विद्यानां तद्भेदव्यवस्थानां च नानारूपाणि स्फुटमेवेतिहासे दृश्यमानानि शक्यापोहानि । यथा प्राचीनार्वाचीनायुर्वेदयोः प्रसिद्ध एव भेदो यथा वा विद्यास्थानभेदः प्राचीनार्वाचीनयुगयोः । तथा हि त्रिदोषसिद्धान्तः प्राचीनायुर्वेदमूलभूतः सर्वथा तिरस्क्रियत आधुनिकैश्चिकित्साविद्भिः । एवं च विद्यासु चत्वारः चतुर्दशाष्टादश वा भेदाः सुप्रसिद्धा नाधुनिकैर्भेदैः सह सङ्गताः । इति विद्याभेदाव्यवस्थैव सिद्ध्यतीति वक्तव्यम् । प्राचीनार्वाचीनायुर्वेदयोर्भेदः प्रयोगविधिभेदनिबन्धनः । नवीनायुर्वेदः सुपरीक्षितप्रत्यक्षमेवाश्रयति, प्राचीनायुर्वेदस्तु यथाकथञ्चिद् विरूढं पारम्पर्यमेव शिश्रिये । सुपरीक्षितदुष्परीक्षितप्रमाणाश्रयभेदात् तयोर्भेदः, न ते शास्त्रे तुल्ये अन्योन्यविकल्पभूते समाचष्टे प्रत्युत तयोः प्रामाण्यभेदमेव आविष्करोति । अभ्युपगतान्यपि

प्राचीने शास्त्रे लक्षणानि लक्ष्यविरहाद् रूढिमात्राणि । अथवा विषयैकदेशे क्वचित् प्राचीनं शास्त्रं यथार्थतया समञ्जसमेवाधुनिकेन शास्त्रेण यथामलकादिद्रव्यगुणनिरूपणे, तावता तु नास्त्येव तयोर्भेदः । पुनश्च प्रयोजनभेदेन तस्यैव विषयस्य जायते व्यावृत्तिकृतो भेदो यथा राजनीते राजधर्मतः । एवं च भूमिकृतोऽपि भेदो लक्ष्यते यथा दार्शनिकप्रस्थानेषु अभिनवगुप्तादिभिः प्रकाशितः । स च दृष्टिभेदाद् विषयस्वरूपमेव अन्यथयति ।

एवं विषयैकत्वे शास्त्रैकत्वमिति नियमो निर्दोष एव प्रतीयते । तथा त्वाधुनिकी सौन्दर्यमीमांसा नैसर्गिकं काव्यकलादिगतं च सौष्ठवं न्यायतः परीक्षमाणा अपूर्वमेव शास्त्रं भवितुमर्हति । इति ब्रुवता अवधेयम्–

**संगीत-शिल्प-नाट्यादि-शास्त्रेषु नन्वनेकधा ।**
**लक्षणानि निरूप्यन्ते लक्ष्यभेदश्च दृश्यते ॥ ११ ॥**
**ततः सर्वसमासेन शास्त्रमेकं किमर्थकम् ।**
**सर्वानुगतसामान्यं किं न स्यान्निष्प्रयोजनम् ॥ १२ ॥**

ननु प्राचीनानि नाट्यादिविषयाणि नानाशास्त्राणि तत्तल्लक्ष्यगततत्त्व-प्रतिपादकानि, ततो विशिष्टेन सौन्दर्यशास्त्रेण कोऽर्थः साध्यः, नहि तेन "यस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवतीति" न्यायेन नाट्यादिसर्वलक्ष्यगतं किमपि परममद्वयं तत्त्वमुपलभ्यते येन तत्तच्छास्त्राणि मूलतः प्रकाशितानि स्युः । न च सौन्दर्यमेव तत्तत्त्वमिति वाच्यम्, यतः तद्व्यञ्जकतया मता रागरूपरसादयः पदार्था अतुल्यकोटिका भान्ति । न चाहेतुकप्रीतिजनकत्व-मेव तत्र स्फुटं सामान्यमिति वाच्यम्, जनकतावच्छेदकानां नितान्त वैलक्षण्यात् । तथा हि रागान्तर्गतस्वरसंयोगवैचित्र्यं रूपान्तर्गतवर्णसंयोग-वैचित्र्यात् सर्वथा विषमम् । उभयत्र प्रीतिमनुभवतोऽपि न स्वराभिज्ञानं वर्णाभिज्ञानं जनयति ।

इदमप्यत्र अवधेयं यदनेके सौन्दर्यं काव्यादिदृष्टातिशयाद् भेदयन्ति । दृश्यरूपगतातिशयविशेष एव सौन्दर्यमथवा अशेषकलाकाव्यादि-

गोचरोऽतिशयोऽपि सौन्दर्यमित्यस्ति विवादास्पदम् । स्वकीये **मूल्यमीमांसा**-संज्ञके ग्रन्थे क्वचिदलेखिषम्– "न सौन्दर्यं नैसर्गिकदृश्यवस्तुधर्मः प्रत्युत कल्पनायोजितप्रतिभासालम्बनधर्मः क्वचिदपि सम्भवी, न सूर्यास्तमयः कुसुमानि वा सर्वेभ्यो रोचन्ते, मनोऽवस्थाविशेषे तु कल्पना अभ्यस्त-रूढिसरणीरतिक्रम्य यत् किञ्चिद् दृश्यमुपादाय विरचयत्यपूर्वं प्रतिभासं यत्र सामान्यविषया अपि गवाक्षायन्ते निर्भासेनार्थसौन्दर्यस्य यथा भग्न-मश्ववाहनं मलिना सञ्चारवीथिका, निर्वाणपरा धूलिनिक्षिप्ता धूमवर्तिका । पूर्वमसुन्दरत्वे कुरूपत्वेनापि प्रतीता विषया दृष्टिभेदात् क्षणेन रूपान्तरं धारयन्ति शोभन्ते चेति" । एतदुद्दिश्य सुहृद्वरेण दार्शनिकप्रवरेण शल्यमहाशयेनालेखि **मूल्यतत्त्वमीमांसायाम्**– "दृष्टिपरिवर्तनेन पुरोऽवलम्बित-चित्राङ्किता विषयाः स्फुटमेव रूपान्तरं दधतीति सत्यं किन्तु ते सुन्दरीभवन्तीति न सत्यम् । कदाचिद् भवनालङ्कारतया चित्रं सुन्दर-मभिधीयेत, न तु तेन तदालिखितविषयः सुन्दर इति वक्तुं शक्यते । चित्रालिखिता मलिना वीथी कथं सूर्योदयादिरूपवत् सौन्दर्यं निर्भासयेत् ? कदाचित् चित्रकृद् नैराश्यगुरुं कञ्चिदर्थं सम्प्रेषयितुं तथा लिखेत्, तथा च तस्य व्यंग्यो मर्म स्प्रष्टुं समर्थः स्यात्, तथापि रम्यत्वप्रतीतिजननं तस्याभिप्रेतमिति न शक्यते वक्तुम्" इति ।

अत्र व्यङ्ग्यार्थस्य हृदयावर्जकत्वं नयनाभिरामरूपगतसौन्दर्याद् विभेदितम् । एतद्युक्तायुक्तत्वं परस्ताद् विवेचयिष्यते । अत्र तु एतावदेवाभिप्रेतं सहृदयश्लाघ्यातिशयविशेषाः कलाकाव्यादिगोचरा न निर्विशेषतया निर्विवादं च समानपदवाच्यतामधितिष्ठन्तीति । एवं च सौन्दर्यशास्त्रस्य पृथक्तया कल्पनैव न युक्ता प्रतिभाति किमुत तस्य नाना-प्राचीनशास्त्राण्यतिशय्यावस्थानम् । बाउमगार्तनकालतः अद्यावधि नाना-वान्तरविभागेषु विभक्तं नानाविमतिभिश्च परिगृहीतमपीदं शास्त्रम् । न तद्विज्ञानरूपेण प्रत्युत दर्शनरूपणैव विकसितम् । ततश्च दर्शनस्यैव विभागविशेषः सौन्दर्यशास्त्रम् ।

**सौन्दर्यनिर्णयः कीदृङ् किंनिबन्धन एव च ।**
**कथं किमर्थं सृज्यन्ते रूपाणीति विचिन्तनात् ॥ १३ ॥**
**तर्कशास्त्रे यथा नाना विद्यानामेकरूपता ।**
**तथैवात्र कलादीनां तत्त्वानामपि मन्यताम् ॥ १४ ॥**

नानाकाव्याकलादिषु पृथक् पृथक् तत्त्वानि लक्ष्यन्ते । चित्रकलायां नानाप्रभवाणां वर्णानां तत्प्रयोगविधीनां चित्रणीयपटादिद्रव्याणां च संयोगाद् रूपाणि सृज्यन्ते । "रूपभेदाः प्रमाणानी"त्यादिना चित्राङ्गानां सङ्ग्रहः सुविदितः । तत्र प्रथमोल्लिखितं रूपमेव प्राधान्यं भजतीति निर्विवादम् । चित्रसूत्रादिषु यस्तत्त्वविचारस्तत्र चित्रणव्यापारोपयोगितत्त्वविभागः चित्रणीयविषयनिर्देशः, प्रयोगविध्युपदेशः, उत्तमाधमादिचित्रलक्षणविवेकः, नानारूपभेदलक्षणानि आदर्शभूतानि प्रमाणानीत्यादि निरूप्यते । अस्मिन्निरूपणे प्रयोज्यतत्त्वानां तत्सम्बद्धविवेकस्य च निर्देशे कृतेऽपि तद्विषयाः दार्शनिकाः प्रश्ना नोत्थापिताः । एवमेव संगीतशिल्पनाट्यादिशास्त्रेष्वपि लक्ष्यते । क्रिस्ताब्दानां नवमशतकात्पूर्ववर्तिष्वलङ्कारशास्त्रेष्वपि सदृशी एव निरूपणभंगी दृश्यते । नाट्यशास्त्रीयरसतत्त्वोपक्षेपात् शब्दार्थविचारप्रसङ्गाच्च व्याकरण-न्याय-बौद्ध-शैवादिदर्शनायातिते च सिद्धान्तसन्दर्भे प्रवृत्तो दार्शनिको विचारः शब्दशक्तिरसानुभूतिप्रतिभासहृदयतादिविषयः । चित्रसंगीतादिष्वपि रसस्य समर्थिता व्याप्तिः । एवं नानालक्षणशास्त्राणि तत्त्वान्वीक्षासूत्रसंदृब्धानि । तत्तद्विभागीया ईक्षितार्थाः लक्षणात्मना व्यवस्थाप्यन्ते, तेषामन्वीक्षया तत्तदवान्तरविभागव्यापकमहाविभागीयतत्त्वानि विचार्यन्ते । अवान्तरविभागीयलक्षणानां महाविभागीयतत्त्वानां च विभाजको भूमिभेदः प्रमाणभेदादुद्भवति । प्रथमायां भूमौ श्रावणादिप्रत्यक्षगोचरस्वरादिव्यंग्यरागादितत्त्वानि लक्षणैर्व्यवस्थाप्यन्ते, ततो द्वितीयायां भूमौ प्राथमिकलक्षणादिपरिज्ञानपुरस्सरं न्यायतो विचारस्तद्व्यापकसौन्दर्यानुभूतिस्वरूपं तत्प्रामाण्यं पुमर्थयोगं च परिच्छिनत्ति । एवं काव्यकलाद्यनुभवपुरस्सराणि लक्षणशास्त्राणि, तद्वासितान्तःकरणानां सहृदयानां पदवाक्यप्रमाणाभिज्ञानामन्वीक्षात्मकं शास्त्रं सौन्दर्यशास्त्रम् । एवं

चास्य दर्शनविभागत्वं काव्यकलादिपृष्ठसेवित्वं च दृढीभवति । तथा सति किं सौन्दर्यशास्त्रं रसायनगणितादिविज्ञानवद् अनन्यं सार्वभौमं वेति निर्धारयितुं युक्तम् ।

**न ज्ञानविषयाः साक्षादविकल्पतया स्थिताः ।**
**विकल्पेनानुमानेन गम्यास्ते व्यावहारिकाः ॥ १५ ॥**
**आभासमाना गृह्यन्ते व्यावृत्त्या लक्षणैर्धिया ।**
**अस्तितो गुणतः कार्यात् तत्त्वात्प्रत्ययतस्तथा ॥ १६ ॥**

यदि जिज्ञासिता विषयाः पृथक् पृथक् कूटस्था अयःशलाकावत् स्वरूपतः साक्षात्कार्या भवेयुः, तेषां ज्ञानमपि सर्वेषामेव स्फुटं निर्विवादं च स्यात् । ननु दृश्यन्त एव घटपटादयस्तथा तज्ज्ञानमपि सर्वस्य स्फुटं निर्विवादं चेति, नैषा लोकसम्मता बुद्धिः क्षोदक्षमा । न लोकः प्रमाणमिति यदाचार्याः प्रतिपादयामासुः तत्तत्त्वज्ञानसन्दर्भे न विवादार्हम् । व्यवहार्यत्वेन निर्विवादेष्वपि घटपटादिषु न घटत्वपटत्वादीनि निर्विवादानि । वस्तुतः क्षणिकाभासतयैव अर्थाः प्रत्यक्षगोचरीभवन्ति, पुनश्च तत्पृष्ठभाविना विकल्पेन तत्कालमुपसंहृतनामजात्यादियोजनाभिश्चानादिभिरनुभववासनाभिश्च बुद्ध्या अध्यवसीयमाना विकल्पिता एव बाह्यार्थसमारोपिता व्यवहार्यवस्तुतया भान्ति[2] । एवमापाततः प्रत्यक्षा अपि व्यावहारिकाः पदार्था न परमार्थतः प्रत्यक्षाः । तेषां लौकिकसाक्षात्कार आभासात्मक एव, किमपि विद्यत इति प्रतीयमानतयैव तेषां सत्तायाः प्रथमत उन्मीलनात् । प्रतीतिविमर्शतः स्पर्शरसादयः परिमाणादयश्च गुणा उपलभ्यन्ते । गुणेष्वपि तेषु नैकदार्शनिकप्रसिद्धः सापेक्षनिरपेक्षत्वभेदो दुर्वचः । आभासमानधर्म-विश्लेषणेन सम्बन्धविचारेण अनुमानतश्च तेषु कार्यकारणभावो गुणद्रव्य-भावः सम्बन्धसम्बन्धिभाव इत्यादयो धर्मा निश्चीयन्ते, ततश्च विकारि-दृश्यभावहेतुतया स्वभावकल्पना समुपजायते । विषयविषयि-भेद-परामर्शेन विषयोपदर्शकस्य ज्ञानस्यैवात्मभूतस्य सर्वव्यापकत्वमखिलमूलत्वं च प्रकाश्यते । एवं ज्ञानस्य तिस्रो भूमयो निर्देष्टुं शक्याः प्रत्यक्षगोचरा आभासभूमिः, अनुमानगोचरा स्वभावभूमिः, साक्षात्परामर्शगोचरा चात्मभूमिः । प्रथमा भोगभूमिरपि कल्पनारम्भबिन्दुरपि, द्वितीया विज्ञान-व्यवहारयोर्भूमिः, तृतीयात्मज्ञानपुरस्सरा पुरुषार्थचर्याभूमिः । विश्वमूलभूताः

पदार्थाः तत्त्वानि वा यैः लक्षणैः प्रत्ययैर्वा परिच्छिद्यन्ते तेऽनेकभूमिविभक्ता उत्तरोत्तरं विमर्शसहाः पूर्णतराश्च प्रत्यक्षबुद्धिप्रकाराः, तर्कबुद्धिप्रकाराः, आत्मबुद्धिप्रकाराश्चेति वक्तुं शक्याः । एषा च प्रत्ययश्रेणी स्वापूर्णता-परिहाराय प्रवृत्ता निर्विकल्पप्रायैन्द्रियप्रत्यक्षादारभ्य आत्मज्ञानपर्यन्तं वितता* । प्रमाणानां ज्ञानात्मकत्वपक्षः ज्ञानस्यैव आत्मस्वरूपत्वपक्षः सर्वविषयाणां च तत्त्वतः ज्ञानाभिन्नत्वपक्षश्चेति त्रयोऽप्यत्र वादा अभ्युप-गताः । एवं च सर्वेऽपि विषया ज्ञानात्मन आभासा एव नानाभूमिकप्रत्यय-परिच्छेद्याः । इदमप्यत्रावधेयं यत् परिच्छिन्नप्रकाशप्राधान्यात् ज्ञानमेवाभासः, परिच्छेदकविमर्शप्राधान्याच्च प्रत्ययः । एवं गूढागूढस्वभावेषु विषयेषु विविधपरिच्छेदक्रमविवर्तिनि च ज्ञाने न लक्षणानि सदा समानकोटिकानि न प्रमाणानि सर्वविषयाणि, नापि विद्या एकरूपाः । नानाविधा विचाराणां नाना च प्रवृत्तयो विद्यानाम् ।

**दृष्टेरनुभवस्याथ युक्तीनामागमस्य च ।**
**भेदात्प्रयोजनस्यापि विद्या-कल्पना-भिदा ॥ १७ ॥**
**तर्कमात्राश्रिताः काश्चिद् विद्या गणितादयः ।**
**प्रत्यक्षमाश्रिता अन्या आगमं च ततोऽपराः ॥ १८ ॥**
**तर्कैणैव प्रवर्तन्ते स्वलक्ष्यस्य विधारिकाः ।**
**आकारमात्रविश्रान्ताः विद्या या गणितादयः ॥ १९ ॥**
**देशकालादिपर्यायैरभिन्नं नियतक्रमम् ।**
**अध्यवस्यन्ति तास्तत्त्वं सनातनमिव स्थितम् ॥ २० ॥**
**सौन्दर्यविषयं शास्त्रं न ताभिस्तुल्यतामियात् ।**
**अनुभूतगुणाशेषव्यावृत्तेर्गणितादिषु ॥ २१ ॥**

प्रत्यक्षागमाभ्यामीक्षितस्य न्यायतो विचारोऽन्वीक्षेति प्रसिद्धमेव । न्यायः कांश्चित् पूर्वसिद्धानिव प्रत्ययान् नियमांश्च आगमय्य ततोऽनुमानत-र्काभ्यां प्रवर्तते । एते मूलप्रत्यया नियमाश्च दृष्टिविशेषं प्रकाशयन्ति । दृष्टिभेदादभ्युपगमभेदस्ततश्च सिद्धान्तभेदः । असकृद् युक्तीनां बलाबल-विचारो दृष्ट्यधीनः । अनुभवानां हेयोपादेयत्वनिर्धारणे आगमानां च श्रद्धे-

*. तु. हेगेल, एन्त्सिक्लोपेदी, पृ. 54 प्र. (हाम्बुर्ग, 1969)

यत्वाश्रद्धेयत्वनिर्धारणेऽपि दृष्टिर्हेतुभूमिकामातिष्ठति । गणितादिषु तर्कमात्राश्रितासु विद्यासु सम्भाव्यविषयाकारमात्रविश्रान्तानां लक्षणानां प्राधान्यम् । तत्र सुखदुःखादिसंभिन्नाकाराणामनुभूतविषयोल्लेखिनामशेषतया व्यावृत्तेर्न सौन्दर्यशास्त्रस्य ताभिस्तुल्यत्वम् ।

ननु प्रत्यक्षविषयविज्ञानैस्तर्हि तस्य तुल्यत्वं स्यादित्युच्यते ।

**न वा प्रत्यक्षविज्ञानं तुलनीयं भवेद् यतः ।**
**प्रत्यक्षविषया लक्ष्याः कार्यकारणभावतः ॥ २२ ॥**
**नाध्यात्मिकगुणास्तत्र लक्ष्यन्तेऽचेतनात्मसु ।**
**यावता बाह्यविज्ञानं वस्तुमात्रोपदर्शकम् ॥ २३ ॥**
**न तावतास्य विषयः पुरुषार्थतया मतः ।**
**अहैतुकीप्रसिद्धा हि सौन्दर्यस्य पुमर्थता ॥ २४ ॥**

अचेतनविषयं वस्तुमात्रोपदर्शकं विज्ञानं नाध्यात्मिकान् गुणान् विषयीकरोति, ततश्च न तद्वस्तुविज्ञानं पुरुषार्थभूतं धर्मं तावता विषयीकर्तुं क्षमम् । सौन्दर्यं तु पुमर्थविशेषो वस्तुसत्त्वव्यतिरेकेऽपि अहेतुकप्रीतिजनकतयैवावच्छिन्नोऽर्थः कश्चित् । नात्मपरामर्शं विनाऽस्य मीमांसा सम्भवति । एवं चेयं मीमांसा प्रत्यक्षपराभ्यस्तर्कपराभ्यश्च विद्याभ्यो विविच्यते ।

**तार्किकात् प्राकृताद् वापि विषयाद् ये बहिःस्थिताः ।**
**आत्मात्मीयतयाभासा लोकचैतन्यसंश्रयाः ॥ २५ ॥**
**संस्कृतिविषयास्तेषां विद्याः सन्ति पृथग्विधाः ।**
**एतास्वेव समाहार्याश्चतस्रो विदिताः पुरा ॥ २६ ॥**
**धर्मार्थादिशास्त्राणि शिल्पनाट्यकलादिकाः ।**
**सर्वाः पुमर्थविषयाः पारम्पर्यनिबन्धनाः ॥ २७ ॥**
**कलादिपारम्पर्यस्य यान्वीक्षा दर्शनानुगा ।**
**सैव रम्यत्वमीमांसा विद्या सांस्कृतिकी ध्रुवा ॥ २८ ॥**

पुरुषेषु परस्परं निवेद्यमाना अभिप्रायाः शब्दादिसंकेतविद्धाः अर्थविश्वविशेषं रचयन्ति लोकचैतन्यालम्बिनम्[3] । ततश्च प्रातिस्विकानि

देहसंश्रितानि मनांसि समतिक्रम्य भासते स्वायत्त इव शब्दप्रत्ययार्थात्मकः कश्चिल्लोकः । यथा परत्र संक्राम्यत्वात् ज्ञानं विषयिणमतिक्रामति ज्ञानान्तरगोचरत्वाच्चार्थो ज्ञानं तथैवायं लोकोऽपि शक्य–शक्त–भावाक्षिप्तः । स्वायत्त इवाभासमानेऽस्मिंल्लोके चैतन्यपरतन्त्रे न केवलं बाह्यार्थाभासा अपि तु आत्मात्मीयाभासा अप्युपलभ्यन्ते । सामान्ये व्यवहारे उभयविधा आभासाः परस्परमध्यस्ता लक्ष्यन्त इति सुप्रसिद्धमेव वेदान्तिषु । तथा हि "युष्मदस्मत्प्रत्ययगोचरयोः विषयविषयिणोः तमःप्रकाशवद् विरुद्धस्वभावयोः इतरेतरभावानुपपत्ता"वित्यादिना अध्यासं व्यवहारव्यापकं प्रतिपादयामासुराचार्याः । आत्मत्वानात्मत्वबोधसंवलिता बाह्याध्यात्मिका आभासाः प्रियत्वाप्रियत्वादिबोधहेतवो भवन्ति । "आत्मनस्तु कामाय सर्वं प्रियं भवती"ति हेतोः आत्मात्मीयाकारतयैवाभासा वस्तुमात्रज्ञाननिष्ठसहजताटस्थ्याददतिरिच्यन्ते । अनात्माध्यासवशादात्मनि विषयता, आत्माध्यासवशाच्च तत्र प्रियत्वादिप्रतीतिर्व्यज्यते । स्वसम्बन्धितया गृहीतेष्वाभासेषु परिमितेन प्रमात्रा समाच्छाद्यन्ते वस्त्वाकारा भावापरार्धैर्वासनामूलैर्मनोमयैर्बिम्बैः । ततश्च तटस्थे समाने च वस्तुस्वरूपे जायते भोगवैचित्र्यम् । तथा चोक्तं विद्यारण्यमुनिभिः पञ्चदश्याम् ।

**भार्या स्नुषा ननान्दा च याता मातेत्यनेकधा ।**
**प्रतियोगिधिया योषिद् भिद्यते न स्वरूपतः ॥ ४.२४ ॥**
**(मैवं) मांसमयी योषित्काचिदन्या मनोमयी ।**
**मांसमय्या अभेदेऽपि भिद्यते हि मनोमयी ॥ ४.२५ ॥**

एवं च विषयेषु सुखोपलब्धिर्ब्रह्मानन्दस्यैव प्रतिबिम्बः । तथा च–

**"एषोऽस्य परमानन्दो योऽखण्डैकरसात्मकः ।**
**अन्यानि भूतान्येतस्य मात्रामेवोपभुञ्जते ॥ १५.२ ॥**
**यद्यत् सुखं भवेत्तत्तद् ब्रह्मैव प्रतिबिम्बनात् ।**
**वृत्तिष्वन्तर्मुखास्वस्य निर्विघ्नं प्रतिबिम्बनम्" ॥ १५.२ ॥**

एवं च विषयेषु मनोवृत्त्यारोपस्तदनुरूपतया च तत्रात्मस्वरूपस्य प्रतिबिम्बनात् स्वीयत्वेष्टत्वोपादेयत्वादिप्रतीतिः । इयमेव च साध्यत्वप्रतीतिः पुरुषार्थप्रतीतिः । इष्टत्वविवेकसम्मतत्वोभयावच्छिन्नाश्चेमे पुमर्थत्वे-

नावधृता विषयाः । तद्व्यवस्थैव शिष्टपारम्पर्यविधृतस्य बृहतो जनसमाजस्य 'संस्कृत्या'ख्यस्य मूलधर्मत्वेन स्थिता "मूल्य"व्यवस्था । "मूल्य"-विषयाश्च विद्यास्त्रय्यादयश्चतस्रः । तादृशानेव मूल्यात्मनो विषयान् रूपयन्ति व्यञ्जयन्ति च काव्यकलादयः । काव्यकलादीन् पुरुषार्थसाधकव्यापारान् विषयीकृत्य प्रवृत्ता अन्वीक्षा सौन्दर्यमीमांसाख्या संस्कृतिविषयकदर्शनविभागविशेषात्मा ।

**वस्तुसन्तो मता येऽर्थाः सामर्थ्यादक्षगोचराः ।**
**ज्ञानयुक्तिप्रकारा वा प्रत्ययत्वनिबन्धनाः ॥ २९ ॥**
**पौरुषार्थास्ततो भिन्नाः पारम्पर्यक्रमागताः ।**
**प्रथिता यासु विद्यासु तत्रेयमवधार्यताम् ॥ ३० ॥**

त्रिविधा उपलभ्यन्ते पदार्था यत्र शब्दानां प्रवृत्तिरिष्यते । सन्ति घटपटादयः परमाण्वादयो वा कारित्रयुक्ताः प्रत्यक्षगोचराः प्रत्यक्षाश्रितानुमानगोचरा वा । एते पदार्था वस्तुसन्तो नानाविज्ञानानां प्रत्यक्षानुमानसाधनानां प्रतिपाद्याश्च विषयाः । अपरे पुनर्ज्ञानप्रकारतया भासमानाः प्रमेयारोप्या अपि न बाह्यार्थनियताः प्रत्युत प्रत्ययत्वमात्रनिबन्धनाः विषयतामात्राक्षिप्ताः यथासंख्याद्रव्यत्वादिकल्पनाः । विशुद्ध-गणिततर्कादिविद्याश्च परिशीलयन्तीमाः कल्पनाः । पुरुषार्थास्तु न कार्यकारणभावापेक्षा वस्तुरूपा बाह्यार्था नापि ज्ञानालम्बना आकारात्मकाः सम्भाव्याः पदार्थाः प्रत्युत आत्मबोधवृत्तिविशेषाः । प्रसिद्धमेव यत्–

**आहारनिद्राभयमैथुनञ्च समानमेतत्पशुभिर्नराणाम् ।**
**धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समानाः ॥**

**पुनश्च–**

**साहित्यसंगीतकलाविहीनः साक्षात्पशुः पुच्छविषाणहीनः ।**
**तृणं न खादन्नपि जीवमानस्तद्भागधेयं परमं पशूनाम् ॥** इति ।

प्रवृत्तिपरवशेभ्यः पशुभ्योऽयमेव पुरुषस्य विशेषो यत्स स्वभावोचितविवेकेन धर्मसाहित्यसंगीतकलाद्युत्तमार्थानुसन्धानपरः स्यात् । त एवार्था

मानवभावोचिताः, मानवसाध्याः, मानवभाव्याश्च । तेषां परिज्ञानमाम्नायान् मनीषिपरम्परातस्तदनुव्याख्यानाच्च लभ्यते । मनीषिणश्च द्विविधाः–केचित् साक्षात्कृतानर्थान् शास्त्ररूपेण निबध्नन्ति, अपरे काव्यशिल्पादिरूपेण । काव्यशिल्पादिकृतयस्तद्गतलक्षणशास्त्राणि च रससौन्दर्यादिसत्तमार्थाना-माम्नायभूतानि । तदालोचनपूर्वकमाचार्याणां सौन्दर्यादितत्त्वानाम् अन्वीक्षा-त्मकम् अनुव्याख्यानम् ।

**विना हृदयसंवादमास्वाद्यत्वार्थवत्वयोः ।**
**विवेकोऽसम्भवी क्वापि वस्तुमात्रनिभालनात् ॥ ३१ ॥**
**कवीनां रसिकानां च हृदयं संस्कृतिवासितम् ।**
**कलाद्यनर्घलोकानां योजना संस्कृतिर्मता ॥ ३२ ॥**
**एवं संस्कृतिसापेक्षे रुचि-दृष्टी उभे अपि ।**
**सौन्दर्यदर्शनं मूलात्तस्मादेव प्रवर्तते ॥ ३३ ॥**

एवं सौन्दर्यदर्शनं दर्शनत्वाद् दृष्टिसापेक्षम्, सौन्दर्यविषयत्वाच्च काव्य-कलादिप्रकाशितसहृदयरुचिसापेक्षम् । दृष्टयो रुचयश्च देशकालतो विवर्तमानासु संस्कृतिषु तत्तत्काव्यकलादिपरम्परालग्नाः, ज्ञानविज्ञान-परम्परालग्नाश्च लक्ष्यन्ते । तदपेक्ष्य प्रवर्तते सौन्दर्यदर्शनं नानाविधम् ।

विदेश्चत्वारोऽर्थाः प्रसिद्धाः सत्ताज्ञानविचारलाभात्मकाः । ततश्च विद्याशब्दस्यार्थ एवं निर्वक्तुं शक्यते–विद्यमानार्थानां विचारपूर्वं पुरुषार्थ-लाभार्थं ज्ञानं विद्येति । सौन्दर्यमीमांसाया विषयः सौन्दर्यं प्रत्यक्षरूपेषु काव्यकलादिषु च प्रतिभासमानम्, तत्त्वदृष्ट्या अन्वीक्षैव तस्या विचार-पद्धतिः, तत्त्वज्ञानं प्रयोजनम् । कविरसिकादिप्रवृत्तिभेदेन तत्त्वदर्शनभेदेन च भिद्यमानेष्वपि सौन्दर्यमीमांसाप्रकारेषु विषयादिसामान्यवशाद् भाव्यमेव तेषु तत्त्वसामान्येन । तथा च सत्यपि संस्कृतिभेदे युगभेदे च सर्वत्रैव नामरूपान्तर्विभागादिभेदपूर्वापि लभ्यत एव सौन्दर्यमीमांसा । नैषा सर्वथाऽऽधुनिक्येव । न चाधुनिकमीमांसापि एकरूपैव । प्राचीनपाश्चा-

त्यसंस्कृतौ प्लातोनाद्या मध्यकाले टामसएक्विनास-आदयः प्रसिद्धा एव । भारतेऽपि अभिनवगुप्तादीनां भ्राजत एव यशःपताका ।

इदमत्र विचार्यं किं तत् सामान्यं मूलं यत्र समन्वितान्यपि सौन्दर्यमीमांसायाः प्रस्थानानि नानाशाखावद् विरोहन्ति । संस्कृतिभूमावुप्तं प्रतिभाबीजं रुचिशिक्षादिसंवर्धितं शब्दाद्युपादानभिन्नान् काव्यकलादिवृक्षान् जनयति । लक्षणशास्त्रैस्तेषां सामान्यविवरणानि संगृह्यन्ते । तदवधारिते च अनुभवक्षेत्रे साक्षात्परामर्शयोग्यानि तत्त्वानि तत्प्रतिपत्तिप्रामाण्यं तदर्थवत्त्वं च विचार्यन्ते सौन्दर्यमीमांसायाम् । एवं प्राकृतिकसांस्कृतिकविश्व-सम्भूतोऽव्यक्तसौन्दर्यबोधो रचनाकृतां सहृदयानां च हृदयानि व्याप्नुवन् काव्यकलादिरूपेण मूर्तो भवति । लक्ष्यते च अल्पविकल्पो घनविग्रह इव सौन्दर्यबोधो द्वयोर्भूम्योः सहजायां कृतकायां च । तद्विषयो विचारोऽपि द्वे भूमी अवगाहते प्रत्युपस्थितविषयविशेषविश्लेषणात्मिकां व्यापकतत्त्वबुद्धि-प्रधानमीमांसात्मिकां च । क्व सौन्दर्यबोधः प्रथमं जायते कथं चावतरति संप्रेषणभूमिं धृतविग्रह इव, कथं परीक्ष्यमाणोऽन्वीक्ष्यमाणश्च तत्त्वधियं जनयतीत्येतदपि प्रश्नजातं सौन्दर्यमीमांसकस्वीकृतम् । प्लातोनाचार्यः प्रत्यपीपदत् सौन्दर्यस्य मूलतत्त्वं नित्यमतीन्द्रियं बुद्धिग्राह्यं च, जन्मनः प्रागेव चात्मा बुद्ध्या तत् साक्षात्करोति गृहीतजन्मा च पुन-रैन्द्रियविषयेषु तदाभासं दृष्ट्वा अबोधपूर्वं स्मरति पर्येषते तन्मूलस्वरूपम् इति । अत्र ज्ञानभूमौ सौन्दर्यबोधस्य नित्यत्वेऽपि कालक्रमे सम्भवः सौन्दर्याभासस्य ऐन्द्रियप्रत्यक्षतः । आभासोऽनुसन्धीयमानः स्वमूलं संकेतयति । यदि कलाकृद् विषयमनुकुर्याद् आभासाभास एव कृतः स्यात् । अतीन्द्रियं तु तत्त्वं बुद्धिगोचरं दूरोत्सारितं स्यात् । अत आचार्यः कवीन् निरंकुशोत्प्रेक्षापरान् मिथ्यावादिन आह[4] । तत्त्वदृष्टिविरोधिनी रूपासक्तिरेव तस्य निन्दनीया, पारमार्थिकमतीन्द्रियत्वं च सौन्दर्यस्य प्रतिपाद्यम् । अपरतश्च प्रत्यक्षवादिनो नातीन्द्रियं किमपि सत् स्वीकुर्वते तथा च सौन्दर्यमपि दृष्टरूपोत्कर्षम् एव मन्यन्ते । एवं सति संगीते सौन्दर्यं साक्षादाह्लादकत्वं साहित्ये कल्पनोद्गृहीतलोकप्रतिबिम्बद्वारा चेति बोध्यम् ।

एवं सौन्दर्यं वस्तुधर्मतया वा लक्ष्यं चित्तधर्मतया वा। वस्तुधर्मत्वेऽपि तदतीन्द्रियं वा स्याद् इन्द्रियगोचरं वा। अतीन्द्रियत्वे तद्बुद्धिग्राह्यं नित्यं तात्त्विकं च सद् विज्ञानविशेषेण कलासु निरूपणीयम्। अस्मिन् मते सुन्दरस्य सतश्चाभेद एव मौलिकः। सौन्दर्यं सत्यं च पर्यायभूते एव। अयं च बुद्धिवादः, तत्त्ववादः, सद्वादो वा प्लातोनीयेषु मध्यकालिकक्रिस्तीयाचार्येषु च प्रमुखतया लक्ष्यः। प्रकारान्तरेण एषैव दृष्टिः वेदेषु आगमेष्वपि च लक्ष्या। आचार्यवर्यैरानन्दकुमारस्वामिभिश्च विस्तरेण समर्थिता।[5]

अपरत्र वस्तुन ऐन्द्रियत्वेऽभिप्रेते सौन्दर्यं रूपविशेष एवेत्यवधार्यम्। प्रायेण लोकेऽनेकेषु च रूपकलावित्सु प्रचलितमिदं मतम्। अस्मिन् स्वीकृते काव्यसंगीतयोः सुन्दरत्वाभिधानं रचनावैशिष्ट्यमेव लक्ष्यीकुर्यात्। काव्योत्कर्षस्तु नैतावता पर्याप्यते, तत्रार्थप्रतिपत्तिगतातिशयस्यापि अभीष्टत्वात्। सोऽयमतिशयः सौन्दर्यपदवाच्यो न वेति नासन्दिग्धम्। पुनश्च कीदृशोऽयमर्थापेक्ष आस्वादः कथं चास्योपादेयत्वं निर्णेयम्, निर्णयस्यापि च तादृशस्य प्रामाण्यं वा कथं प्रतिपत्तव्यमित्यादयः प्रश्नाः समाधानमपेक्षन्ते। केचिदास्वादं कल्पनार्पितं लौकिकमेव, अन्ये पुनर्लोकोत्तरं प्रतिपादयन्ति। तदुपादेयत्वमपि अनन्यपरतन्त्रतया लौकिकपुरुषार्थोपकारतया वा व्याचक्षते।

एवं त्रयः प्रश्नाः प्राधान्येन सम्मुखीभवन्ति रूपधर्मः सौन्दर्यमुतारूपधर्मः- इति प्रथमः, काव्याद्यास्वादः लोकसाधारणः असाधारणो वेति द्वितीयः, सौन्दर्यं काव्याद्यास्वादो वा स्वतन्त्रः पुरुषार्थो न वेति तृतीयः। एवं च इन्द्रियग्राह्यो वा बुद्धिग्राह्यो वा लौकिकोऽलौकिको वा योग्योऽर्थः सौन्दर्यमिति बहुधा लक्ष्यते, तद्विचारो नानासंस्कृतीनां दार्शनिकपरम्परासु तत्तत्कलाकाव्यादिसंसारानुगतासु तत्तद्दृष्टिपरासु।

ननु पारम्पर्यागताः शिष्टधर्मा विद्याकलाचारव्यवहाररूपाः जातिदेशकालावच्छिन्नाः समुच्चित्य संस्कृतिपदवाच्या अनियता विभिद्यन्ते तथा च दृष्टयोऽपि नानादर्शनप्रस्थानजनन्यः। तदपेक्षा तर्हि सौन्दर्यमीमांसापि अनियतत्वाद् अप्रमाणैव स्यात् लोकसमुदाचारवत्, आचार्यैरुक्तं हि न लोकः प्रमाणमिति।

न, इतिहासगम्या सापेक्षतैव तत्र नियम इति वक्तुं शक्यत्वात् । सौन्दर्यशास्त्रस्य प्रतिपादनभेदाः स्वयुगलब्धप्रचारान् कलाकाव्यादिसंसार-वासितसहृदयतासंस्कारानपेक्ष्य दर्शनप्रस्थानप्रतिपादित-दृष्टीश्चालम्ब्य प्रवर्तन्ते । सहृदयताप्रकाराः दृष्टिप्रकाराश्च भिद्यमाना अपि न निरङ्कुशा मन्तव्याः, तेषामिच्छाज्ञानक्रियादिगतविषय-विषयि-वाच्य-वाचक-साध्य-साधनादितत्त्वव्यवस्थाप्रतिष्ठितत्वात् । अनेकान्तं हि तत्त्वं नयभेदेन विविधप्रतिपत्तियोग्यं च । अनेकान्तं च सौन्दर्यं बहुधास्वाद्यं बहुधा च व्यञ्जकभेदेन तत्प्रतीतिः परत्र संक्राम्या । नया बुद्धिप्रवृत्तिभेदास्तत्स्वभावनियताः, बुद्धिस्वभावश्च विषयपरिच्छेदात्मा नानाभूमिकैस्तत्त्वोद्ग्राहकैः प्रत्ययैर्व्यज्यते । एवं बुद्धिविषययोस्तत्त्वनिष्ठप्रकारविभाग एव नयभेदमूलम् । सौन्दर्यप्रतीतिभेदोऽपि नानोपाधिव्यङ्ग्यानां नानाकाराणां नानाभावापेक्षया आस्वाद्यत्वाद् उपादेयत्वाच्च नाना सम्भवति* । शब्दाद्युपाधिगता व्यञ्जकत्वशक्तिरुपादानरचनाश्रितत्वात् कल्पनामूला, भावाश्च वासनोपाधिकात्मप्रतीतिमूलाः । एवं च कल्पनारचितविषयाकाराद् व्यज्यमानोऽर्थः आत्मबोधप्रकारभूतभावालम्बनतया स्फुटीभवति । आकाररचना कल्पनानिबन्धना, कल्पना भावनिबन्धना, भाव आत्मबोधनिबन्धनः । आत्मसंवेदनप्रकारः कल्पनाप्रवृत्तिश्चेति द्वे मूले सौन्दर्यप्रतीतिवैलक्षण्यस्य । कल्पनापि मानसी रचनाशक्तिरित्यात्मकृतिरेव । तथा च श्रूयते–"आत्मकृतिरेव शिल्पमिति" ।[6] एवमन्ततः आत्मसंवेदनादेव प्रकाशते सौन्दर्यबिम्बो यथा रविकिरणेभ्य आखण्डलधनुः । समुच्चित्य चोभौ पक्षौ शक्यते वक्तुं विषय-विषयि-तत्त्वाश्रितत्वात् सौन्दर्यमीमांसायास्तद्गतैर्विभाजकप्रत्ययैः नियतत्वात् सापि नानियता । भावोपाधिक आत्मा प्रतिभा-सनाथः सौन्दर्यबिम्बं कल्पयति, बुद्ध्युपाधिकः स तमेव परीक्षते । एवं रचनाकृत् सहृदयश्च तयोर्मनीषे च मूलतस्तादात्म्यं भजतः, आत्मशक्तेरेव पक्षद्वयत्वात् । आत्मप्रतीतिभेदश्च

*. तु. हेगेल, पूर्वोद्धृत. पृ. 441 प्र.

सौन्दर्यबोधस्य तन्मीमांसायाश्च भेदे पारमार्थिको हेतुः । स्मर्तव्यं चात्र यत् संस्कृतिमात्रम् आत्मबोधस्यैव विस्तारः, तथैव च सौन्दर्यबोधोऽपि संस्कृत्यङ्गभूतः ।

ननु आत्मबोधप्रकाराणां को नियामकः, कथं च तद्गतभेदाः संस्कृतिषु यादृच्छिका इव लक्ष्यन्ते, तथा च पूर्वोक्तापत्तिरनिवारितैव तिष्ठति ।

अत्रोच्यते—आत्मबोधप्रकाराणां हेतुर्द्विविधः—आत्मशक्तीनां तदुपाधीनां च वैचित्र्यम् । आत्मस्वरूपस्य तद्गतशक्तीनां च निरूपणं बहुधा नानागमेषु व्याख्यानेषु चाचार्याणामुपलभ्यते । तानि तात्त्विकनिरूपणानि मुख्यतया शास्त्रीयविचाराङ्गानि लोकप्रसिद्धमात्मस्वभावमनुपहत्यैव व्यवहारे तत्समीक्षापूर्वकं बुद्धिमारूढानि । कला-काव्यादिप्रवृत्तौ तु व्यावहारिक एव मानवस्वभावो यथाप्रतिभासं गृह्यते निरूप्यतेऽपि प्रायेण । ननु एवं सति प्रतिभासमानस्य काव्यसंसारस्य क इव सम्बन्धः शास्त्रीयज्ञानार्पितेन परमार्थसता । न परमार्थः काव्यकलादिविषयो न वा काव्यकलादिसंसारः शास्त्रविषयः । उभावपि अयःशलाकावत् पृथक्-पृथगवस्थितौ सर्वथाऽसम्बद्धावेव । एवं पार्थक्ये व्यवस्थिते कतर आत्मस्वभावः सौन्दर्यशास्त्रेण ग्राह्यः—दर्शनशास्त्रप्रसिद्धो लोकप्रसिद्धो वा ?

उच्यते—सौन्दर्यशास्त्रेण काव्यादिप्रतिबिम्बित एवात्मा ग्राह्यः । प्रमातृत्वकर्तृत्वभोतृत्वाादिलक्षिते मानवस्वभावे प्रसिद्धेऽपि मानवोचित-साध्यसाधनविवेको नासन्दिग्धतया प्रसिद्धः । प्रमातृत्वे प्रसिद्धेऽपि प्रमाणानां संख्या विषय-तारतम्यादीनि न प्रसिद्धानि । कर्तृत्वे प्रसिद्धेऽपि तत्र नेयत्ता विदिता पुरुषस्वातन्त्र्यस्य, कर्तव्यविवेकमूलं च न प्रसिद्धम् । एवं भोक्तृत्वे प्रसिद्धेऽपि श्रेयःप्रेयोविवेको न प्रसिद्धः । प्रत्युत्पन्नां स्वामवस्थां जानन्नपि न मानवो भाविवृत्तं नियतस्य मृत्योरनन्तरवर्तिनीं वा दशां जानाति । ततश्च

संशयाशाभयाद्यान्दोलितचेताः कल्पयति सम्भाव्यानि तत्त्वानि । एवं च सामान्यतः प्रसिद्धेऽपि मानवस्वभावे अस्त्येव व्यवहारेऽपि संशयजिज्ञासा-श्रद्धादीनामवकाशः । जायस्व म्रियस्व खादत पिबतेत्यादिस्थूलबोधभूमौ विदितेऽपि मानवचरिते तत्स्वभावे चं विवेकोऽपेक्ष्यते शास्त्रतस्तत्सदसत्त्व-निर्णयार्थम् । एवमनित्यवस्तुतया विदितेऽपि मानवस्वभावे तच्चरितेऽपि न तद्विदितं परमार्थतः । व्यावहारिकानुभवलब्धविषयाभासान् परीक्ष्य प्राकृत-पदार्थशास्त्राणि वस्तुस्वभावानवधारयन्ति, तच्च ज्ञानं "स्थिरः सूर्यश्चला पृथ्वीत्या"दिव्यवहारसाधकत्वात् शास्त्रानभिज्ञानामपि श्रद्धाविषयः । एवं भोगात्मकानाभासान् परीक्ष्य श्रेयोरूपानर्थान् यान् निर्धारयन्ति पुरुषार्थ-शास्त्राणि तेऽपि श्रद्धाविषयतयाभ्युपगम्यन्त एव व्यवहारे विवेकार्थिभिः । एवं व्यवहारभूमौ पुरुषोऽपरोक्षानाभासान् युष्मदस्मत्प्रत्ययगोचरान् अर्थार्थितया शास्त्रीयविज्ञानेन वस्त्ववस्तुतया अर्थानर्थतया च विविञ्चन् प्रवर्तते । विवेके चास्मिन् द्रव्यत्वकारणत्वादिप्रत्ययपुरस्सरं प्रमाणवृत्तेः स्फुटं प्राधान्यम् ।

काव्यकलादिषु तु प्रतिभासभूमेरारभ्य व्यवहार्यवस्त्ववस्तुभेदमुपेक्ष्य अर्थानर्थभेद एव प्रतिबिम्बवत् स्फुटीक्रियते । एवं च पुरुषार्थविवेके विद्यमानेऽपि विषयपरतन्त्रप्रमाणवृत्तिस्थाने विषयोपरचनस्वतन्त्रकल्पना-वृत्तिरेव प्रधानीभवति । सा च कल्पना स्वतन्त्रवस्तुविज्ञानाद्भिद्यमाना भाववर्णैरात्मानमेवालम्बनाकारमुल्लिखति । व्यावहारिकी प्रज्ञा यथाभूतं कारित्रलक्षितान् बाह्यान् विषयाकारानध्यवस्यति, कविप्रतिभा विषयि-परामर्शसघनं भावमेवाकारयति । व्यवहारे विषयप्रमितेः, काव्यसंसारे आत्मपरामर्शस्यैव प्राधान्याद् आत्मभावप्रकारा एव तद्विषयक-

रुचिदृष्टिनिर्णायकाः । एवं च सौन्दर्यमीमांसास्वरूपं पूर्वोक्तं सङ्ग्रहीतुं शक्यम्–

**सौन्दर्यशास्त्रं नापूर्वं नैकरूपं सदैव वा ।**
**बाह्यार्थविषयं नैव लक्षणैकाश्रयं च न ॥ ३४ ॥**
**पुरुषार्थविशेषस्य यान्वीक्षा साम्प्रदायिकी ।**
**ज्ञेया सौन्दर्यमीमांसा सापेक्षा सेतिहासतः ॥ ३५ ॥**

यच्चाधुनिकं रूपमस्या मीमांसायाः क्रमसमुल्लसितं तत्र हेतुर्दृष्टि-भेदविकास एव काव्यकलादिवैलक्षण्यभेदसहचरितः । पुमर्थेषु ज्ञान-धर्मातिरेकेण सौन्दर्यमपि पृथग् गण्यते साम्प्रतम्, प्रमाणेषु चागमो नाभ्यु-पगम्यते । देवाख्यानानि वीराख्यानानि चाश्रद्धेयतया नावहन्ति रुचिम् । कलादिष्वपि तादृशाख्यानचित्रणमुपेक्ष्यत एव । प्राकृतजनसमुदाचारो मध्य-माधमवर्गीयाणां जनानामनुत्तमप्रकृतिप्रायाणामुच्चावचशीलानां प्रातिस्विकं चरितम्, मिथो विरोधनिर्मिता विकारिणी च लोकमर्यादा, साहित्यकृतां कलाकृतां च रचनाविषयाः । रचनाव्यापारेऽपि च पारम्पर्यनिरपेक्षे स्वातन्त्र्य एव महान् निर्बन्ध आधुनिकानाम् । एवं च विचारसरणौ भिद्यमानायां लक्ष्यभेदनिबन्धनरुचिसंस्कारेषु च भिद्यमानेषु सौन्दर्यबुद्धिमीमांसाऽपि नवमेव धृतवती रूपम् ।

**अधुनातनरूपस्य हेतुर्मतिरभिनवा ।**
**सौन्दर्यं पृथगेवार्थो ज्ञानधर्मविलक्षणः ॥ ३६ ॥**
**विज्ञानमात्रप्रामाण्यं प्रत्यपादि मनीषिभिः ।**
**सौन्दर्यबुद्धेः प्रामाण्ये शङ्काप्युपस्थिता ततः ॥ ३७ ॥**
**आरोहेद् ज्ञानपदवीं सौन्दर्यनिर्णयः कथम् ।**
**लोके रुचयो भिन्ना दृश्यन्ते हि निरंकुशाः ॥ ३८ ॥**

नूतनाश्च प्रश्नाः समुत्थापितास्तत्र दार्शनिकप्रवरेण ह्यूमेन प्रत्यक्षमेव प्रमाणं प्रतिपादयता वासनानुगुणरुचिरत्वप्रत्यक्षमेव सौन्दर्यबुद्धिरिति

सिद्धान्तितम्[7] । शर्मण्यदेशीयैस्तथा दार्शनिकप्रवरैः कान्ताचार्यैः सौन्दर्यबुद्धेः ज्ञानाद्भेद एव प्रतिपादितः । ज्ञानं सत्यासत्यतया निर्धारणीयम्, सौन्दर्यबुद्धिस्तु न तथा, कल्पनानिबन्धनत्वात्[8] । ततः प्रभृति प्रायेणैव आधुनिकाः सौन्दर्यतत्त्वविचारकाः सौन्दर्यबुद्धेः ज्ञानमीमांसापद्धत्या विवेचनं बहुधा अकार्षुः । तत्त्वनिर्णयस्तत्र ज्ञानस्वरूपविचारमपेक्षते ।

**विज्ञानं न निराकारं न यथार्थोपदर्शकम् ।**
**कल्प्यते विषयो नाना व्यवहारे कलादिषु ॥ ३९ ॥**
**रचना प्रतिभासस्य चिद्वृत्तिमनुगच्छति ।**
**ज्ञाने कर्मणि भावे च वृत्तयो विविधाः स्मृताः ॥ ४० ॥**
**वस्तुतन्त्रं मतं ज्ञानं ज्ञानं कर्मानुधावति ।**
**अनादिवासनालभ्यैर्धर्मैर्वस्तु विकल्प्यते ॥ ४१ ॥**
**स्वतन्त्रः पुरुषः कर्ता विधिबोधपुरस्सरः ।**
**विधेः प्रत्यायका धर्माः स्वातन्त्र्यस्य विकल्पकाः ॥ ४२ ॥**
**भावे विषयी विषयं कुरुते न तु वस्तुतः ।**
**प्रतिबिम्बमयं तत्र सृजत्यात्मानमिच्छया ॥ ४३ ॥**
**दृश्यमाना विकल्प्यन्ते स्वतः स्फुरितया धिया ।**
**विषयाः, भाति सौन्दर्यमन्तर्बाह्यतया स्थितम् ॥ ४४ ॥**

नैयायिकवैभाषिकादिभिः बाह्यार्थवादिभिः विषयनिष्ठतामाकारता-मभ्युपगच्छद्भिः ज्ञानं स्वत आकाररहितं वस्तुग्राहकं प्रतिपाद्यते । तद्विरोधे सौत्रान्तिकादिभिः प्रतिपादितो विकल्पितार्थवाद एवात्र ततो युक्ततर इति स्वीक्रियते[9] । तथा च विषयेषु दृश्यमानं रूपं बाह्यार्थप्रतिभासमुपादाय कल्पनया सृज्यते नानाविधया । तिस्रश्च चैतन्यस्य विधाः प्रसिद्धा ज्ञानकर्मभावसम्बद्धाः । ज्ञानसम्प्रयुक्ता कल्पना द्रव्यत्वकारणत्वादिवस्तुप्रकारानाविर्भावयति, कर्मसम्प्रयुक्ता श्रेयस्त्वनियोज्यत्वादिविधिज्ञानान्तर्भूतानात्मसम्बद्धान्प्रकारानुन्मीलयति, भावनिबन्धना पुनः कल्पना विषयं मायेव चमत्कारितया रूपान्तरयति । वर्णच्छटाभा स्वरे सुरेन्द्रचापे

प्रत्यूषाभे वा पाटले प्रत्यक्षमिव दृश्यमानं सौन्दर्यं न वस्तुतः कल्पना-निरपेक्षम् । तथोच्यते–

**न स्वहेतुकृतं लक्ष्यं रचितं प्रतिभासतः ।**
**कल्पनया रुचिकृती सम्भवतः सहैव ते ॥ ४५ ॥**
**रम्यार्थोन्मीलनं काव्यकलादि-रचना तथा ।**
**आस्वादश्च समः सर्वो व्यापारः प्रथमं कवौ ॥ ४६ ॥**
**पण्डितेषु ततस्तस्य समीक्षा लक्षणाश्रिता ।**
**लक्ष्यानुसारिणी सा धीः शास्त्ररूपतया स्थिता ॥ ४७ ॥**

सौन्दर्यभासस्तद्विषयकल्पना तदास्वादश्च सममेव प्रथमतः कवेः कलाकृतो यस्य कस्यापि वा शिल्पानभिज्ञस्यापि तत्कालं मनोभूमौ सहजप्रतिभाप्रेरितस्य स्फुरति । आपामरमपि जनः क्वचिद् इन्दोरिन्दीवरस्य वा दर्शनेन तत्कालं कवीयते पण्डितायते च । सौन्दर्यबुद्धिश्चैषा नानाभूमिषु लक्ष्यते ।

**विलक्षणैव प्रत्यक्ष-बुद्धिः पूर्वं प्रजायते ।**
**चमत्कारकता यस्या भासतेऽन्तर्निगूढवत् ॥ ४८ ॥**
**ततः सहृदयैस्तत्र गुण-दोष-विवेचनम् ।**
**स्वानुभूतिप्रमाणेन न्यायेन च विधीयते ॥ ४९ ॥**
**पुरस्सरं भवेत्तत्र लक्षणादिनिरूपणम् ।**
**लक्षणादिप्रधानं तु शास्त्रमित्यभिधीयते ॥ ५० ॥**
**तत्तदालोचनाशास्त्रप्रयुक्ता मूलकल्पनाः ।**
**अन्वीक्ष्यन्ते तु तर्केण तत्स्यात् सौन्दर्यदर्शनम् ॥ ५१ ॥**
**सौन्दर्यं विषयस्तत्र प्रत्यालोचनगोचरः ।**
**तत्त्वजिज्ञासयान्वीक्षा तर्कस्तत्साधनं मतम् ॥ ५२ ॥**
**दर्शनानां पुनस्तेषां मूलदृष्टिविचिन्तनम् ।**
**अनेकान्तप्रसङ्गादिदृशा प्रज्ञा मता तु सा ॥ ५३ ॥**

चतस्रोऽत्र भूमयो बुद्धेः प्रत्यक्ष-समीक्षान्वीक्षाप्रज्ञात्मिकाः । सौन्दर्यविषया प्रतिभोन्मेषजननी प्रत्यक्षबुद्धिरेवाद्या । तत्र मेघदर्शनमात्रेण

युवतिदर्शनमात्रेण वा मेघोऽयमिति युवतिरियमिति वा वचननिश्शेषितार्थेन न सौन्दर्यदर्शनं किमपि सूच्यते तादृशदर्शनवर्णनयोर्जरद्वैज्ञानिकेषु पिहितहृदयकपाटेष्वपि उपलभ्यमानत्वात् । यत्र पुनः "अहो मेघः", "अहो युवति"रित्यादिवचनप्रवृत्तिर्लक्ष्यते तत्र ईषद्दृष्टविकल्पितसौन्दर्यस्य प्रकाशने वचोदरिद्रतैव हेतुरवसेयः । कवेस्तु सौन्दर्यबुद्धिः व्यक्तस्फुटबिम्बा प्रादुर्भवति "वप्रक्रीडापरिणत -गज-प्रेक्षणीयं ददर्श," "कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम्" इत्यादिवाक्यैः । न हीयं प्रत्यक्षसौन्दर्यबुद्धिर्यथास्थितघटपटादि-सविकल्पकप्रत्यक्षतुल्या प्रत्युत प्रतिभास्फूर्तिरेव नानामात्राभेदेन । बहिः-प्रकाशनं चास्यास्तत्तत्सङ्केतोपादानविरचनपाटवपरतन्त्रम् । द्विविधा चेयं प्रतिभा कारयित्री भावयित्री चेति प्रसिद्धमेव । इदन्त्ववसेयं यत् कवेः कलाकृतो वा मानसे रचनापरस्य प्रथमतः प्रतिभास्फूर्ती उभे अपि प्रादुर्भवतः । भावयन्नेव कवी रचयति । शब्दादिसङ्केतोपादानव्यक्तरूपाण्येव समक्षं प्रस्तूयन्तेऽन्येषाम् । निर्विकल्पकग्राह्योऽव्यक्तकल्पो बाह्योऽर्थः, व्याव-हारिकविकल्पग्राह्योऽर्थः, न्यूनाधिकस्फुरितप्रतिभाविकल्पितोऽर्थः, बाह्योपा-दानरचितसङ्केतकृतव्यक्तिश्चार्थ इत्यादिभिरनेकैः पुरस्तिष्ठति रूपैः संप्रेष्योऽर्थः । अर्थदर्शनं तदास्वादस्तद्विकल्पनं स्वविकल्पितस्य परत्र संप्रेषणमिति सर्वोऽपि व्यापारो विवेचनीयत्वेऽपि अविच्छिन्नतया समाना-परोक्षबुद्धिधारासंलग्नः ।

तद्विवेचनं त्वन्य एव व्यापारो बुद्धेः व्यावृत्तिप्रधानो लक्षणाध्यव-सायपरस्तत्तच्छास्त्राङ्गतया प्रवृत्तः । एषा भूमिः समीक्षात्मिकेति वक्तुं युक्तम् । नानाशास्त्रसंगृहीतलक्षणेषु तद्व्यापकतत्त्वान्वीक्षा तद्दर्शनमिति वक्तव्या सौन्दर्यमीमांसाभिधानयोग्या । मीमांसास्त्वेता बहुविधा पुनर्विचारविषयाः, सा च विचारसरणिः प्रज्ञेति वक्तव्या । तदुच्यते–

**सौन्दर्यबुद्धिर्द्विविधा प्रतिभानात् कृतेश्च सा ।**
**काव्यादि रचयन्ती सा तदास्वादपरायणा ॥ ५४ ॥**
**या साक्षात्कारिणी बुद्धिः सैवात्र प्रतिभा स्मृता ।**
**सा पूर्वकल्पना सैव रचना व्यक्तिरित्यपि ॥ ५५ ॥**

अदृष्टाद्हेतुतस्तस्याः स्फूर्तिः संजायते क्वचित् ।
सहजात्तत्क्षणाद्वापि वस्तु वासयते श्रिया ॥ ५६ ॥
चमत्कारवती तस्मात् सृष्टिः प्रत्यग्विभात्यहो ।
ग्रावप्रख्यं जगत्सर्वं सरसं भाति तत्क्षणात् ॥ ५७ ॥
रचना-विषया-स्वाद-त्रितयस्य परीक्षणम् ।
लक्षणैः क्रियते यत्र तच्छास्त्रमभिधीयते ॥ ५८ ॥
नाट्यशिल्पादिशास्त्राणां तुल्यतत्त्वार्थगोचरा ।
अन्वीक्षा न्यायतस्तस्या मीमांसेत्यभिधीयते ॥ ५९ ॥
सौन्दर्यबुद्धिः प्रथमं जायतेऽथ परीक्ष्यते ।
अन्वीक्ष्यते ततो न्यायात् त्रिपर्वा ज्ञानपद्धतिः ॥ ६० ॥
विषयो रचनायुक्तो रूपात्मैव विभाति यत् ।
प्रियत्वबुद्धिराद्या सा कृतितः प्रकृतेरिव ॥ ६१ ॥
धियोऽस्याः सविषयायाः लक्षणैरवधारणम् ।
गुणदोषपरीक्षापि तत्तच्छास्त्रे व्यवस्थिता ॥ ६२ ॥
प्रतिभासात्परीक्षान्ता बुद्धिरन्वीक्ष्यते यया ।
तत्त्वतो हेतुतश्चापि सा मीमांसाभिधीयते ॥ ६३ ॥
सौन्दर्यबुद्धावाद्यायां तस्यामुन्मिषति द्वयम् ।
विशिष्टरूपलोकोऽथ संस्कारश्च रसविदाम् ॥ ६४ ॥
आगमथ्य द्वयं तत्तु लक्षणानां निरूपणम् ।
गुणदोषविमर्शश्च तत्संलग्न इव स्थितः ॥ ६५ ॥
सौन्दर्यबुद्धिमीमांसा तत्पुरस्कृत्य वर्तते ।
तत्त्वदृष्टिविशेषोऽपि तथैवागम्यते पुरः ॥ ६६ ॥
रूपसंसारपूर्वत्वं रससंस्कारपूर्वता ।
दृष्टिपूर्वङ्गमत्वं च मीमांसाक्षिपति त्रयम् ॥ ६७ ॥

न हि सौन्दर्यमीमांसा पुरःस्थितमिव वस्तुभूतं सौन्दर्याख्यं कञ्चिद्-धर्ममालोचयति, प्रतिभाविकल्पितं सङ्केतप्रत्यायितं लक्षणविभक्तं सहृदय-

निर्णयप्रमाणितं चमत्कारिणमर्थं त्वालोचयति तत्रानुगततत्त्वजिज्ञासया। मीमांसा च दृष्टिविशेषमवलम्बमाना यां बुद्धिमन्वीक्षते सा रूपसंसारालम्बना सहृदयतासंस्कारसंप्रयुक्ता च। दृष्टी रूपसंसारः सहृदयतासंस्काराश्च न सर्वसाधारणाः सनातना वा। काव्यकलाकृतिनिर्मितो रूपसंसारस्तत्परिशीलनवासनात्मकाश्च सहृदयैः परीक्षकैरनुमोदिताः संस्कारा इतिहासक्रमविवर्तिनो देशकालभेदभिन्नात्सम्प्रदायादेव लभ्यन्ते। तथा हि–

**वेद्यते रूपसंसारो देशकालप्रभेदतः।**
**तदास्वादनसंस्काराः गृह्यन्ते सम्प्रदायतः॥ ६८॥**
**दृष्टयोऽपि तथा लभ्याः सम्प्रदायसमागताः।**
**रुचिदृष्टिप्रवृत्तीनां समवायो हि संस्कृतिः॥ ६९॥**
**भिद्यते देशकालाभ्यामविच्छन्नापि वर्तते।**
**एकानेकतया नृणां पारम्पर्यविवर्तिनी॥ ७०॥**
**संस्कृतेरेवमायत्ता मीमांसा नैकरूपिणी।**
**पूर्वोक्तहेतुसन्दर्भे तस्या आलोचनं पुनः॥ ७१॥**
**अन्वीक्षाया भवेत्कापि पद्धतिर्नूतना धियः।**
**इतिवृत्तमपेक्ष्यापि यत्र तत्त्वविचारणा॥ ७२॥**

एवं सौन्दर्यमीमांसागतं सापेक्षत्वमंशद्वयमवगाहते सांस्कृतिकलक्ष्यभेदं तात्त्विकं च दृष्टिभेदम्। न चैतावंशौ स्वरूपसम्बद्धौ। ऐतिहासिकलक्ष्यभेदक्रमेण तन्निबन्धनमीमांसाभेदाः प्रतिपादयितुं शक्या यथा प्राचीनयवनसौन्दर्यमीमांसायाः प्राचीनभारतीयालङ्कारशास्त्रविहितमीमांसांशानां वा, किन्तु एतादृशविवरणमितिवृत्तनिरूपणमेव स्यात्, न तत्र तत्त्वविचारः सङ्गतिलाभेन विश्राम्येत्। इतिहासनिरपेक्षतया च विचारस्तेषु मीमांसासंप्रदायेषु अन्यतमसमर्थनं वा स्यात्, मीमांसान्तरं वा तथैव सापेक्षम्। एवं च इतिवृत्तमनुपेक्ष्य तत्त्वनिबन्धनेन विचारेण भाव्यम्। तादृशविचारपद्धतिः

मीमांसाविशेषमतिशयाना प्रज्ञेत्यत्राभिधीयते । तत्र विद्येतिहाससाहाय्येन तत्त्वनिर्णये सम्भाव्यानां दृष्टीनां बलाबलविचारः प्रक्रम्यते । दृष्टिश्च कः पदार्थ इत्यनुयोगे उच्यते–

**प्रमाणैरर्थविज्ञानमन्वीक्षा तस्य तर्कतः ।**
**शङ्कावधिर्मतस्तर्कः प्रमाणस्योपकारकः ॥ ७३ ॥**
**युक्तिमूलतया तत्रापेक्ष्यन्ते प्रतिपत्तयः ।**
**पुंसामियत्तां ज्ञानस्य सम्भवासम्भवौ तथा ॥ ७४ ॥**
**विवेकं निर्दिशन्त्यश्च दृष्टिसंज्ञा भवन्ति ताः ।**
**लक्ष्यैकदेशवर्तित्वादपूर्णा नापि सङ्गताः ॥ ७५ ॥**
**तत्त्वप्रत्यया विविधास्तत्तद्दृष्टिनिबन्धनाः ।**
**तद्विरोधपरीहारे प्रज्ञा युक्तिर्निषेधिका ॥ ७६ ॥**
**विवादीन्यपि तत्त्वानि संवादीनि यथाक्रमम् ।**
**जायन्ते सप्रसङ्गत्वाद् वादानेकान्ततागतेः ॥ ७७ ॥**
**मूर्धाभिषिक्ता दृष्टान्ता लभ्यन्ते प्रथमं ततः ।**
**निकषाणां लक्षणानां निर्धारणपरा च धीः ॥ ७८ ॥**
**ततो व्यापकतत्त्वानामन्वीक्षा न्यायचक्षुषा ।**
**ततोऽपि तत्तद्वादानामनेकान्तविचारणा ॥ ७९ ॥**

एवं ज्ञानस्यानेका भूमयः समुल्लसन्ति प्रतिभासादारभ्य प्रज्ञापर्यन्ताः । इदं त्ववधेयं बहुधा प्रज्ञा प्रतिभापरपर्यायतया प्रयुज्यते । वस्तुतो मूलतत्त्वानि परीक्षमाणा तान्यतिक्रामन्ती बुद्धिः एकतो निषेधात्मिका, अपरतश्च लोकोत्तरपरमार्थसाक्षात्कारिणी प्रतिभा । प्रकृते विचारसन्दर्भे तु प्रज्ञा दर्शनप्रस्थानानां मूलप्रतिपत्तिपरीक्षात्मिका, प्रतिभा च साक्षात्कारिणी बुद्धिरित्येतावदेव अभिमतम् ।

नानादर्शनप्रस्थानेषु परस्परविरुद्धेषु कतमच्छ्रेय इत्यत्र त्रयो विकल्पाः सम्भवन्ति । स्वाभिमत एव कश्चिद् प्रस्थानविशेषः श्रेयान् न तु प्रस्थानान्तराणीति प्रथमः, सर्वाण्येव परस्परव्याहतत्वात् तिरस्कार्याणीति द्वितीयः, सर्वाण्येव सापेक्षतया सत्यानीति तद्व्यापकं बृहत्तरं

सत्यमन्वेष्टव्यमिति तृतीयः । कैश्चिद् दार्शनिकैस्तत्तत्प्रस्थानानामनैकान्तिकत्वमालोच्य परिच्छेदातीतं ज्ञानमन्विष्टम् । सा च सर्वपरिच्छिन्नतत्त्वनिषेधिका परमज्ञानोन्मुखतैव बुद्धेः प्रज्ञात्मता । जैना माध्यमिकाः प्लातोनहेगेलमार्क्सादयश्च विविधान् प्रज्ञावादान् प्रतिपादयामासुः, यत्र दर्शनानां सापेक्षत्वेऽपि सत्यत्वमैतिहासिकत्वेऽपि तात्त्विकत्वमभ्युपगतम्[10] ।

**नयभेदं समाश्रित्य स जैनैः प्रतिपादितः ।**
**अनेकान्तवादः प्रतियोगी केवलिनो धियः ॥ ८० ॥**
**परिच्छिन्नस्वभावानामर्थानां तत्त्वशून्यताम् ।**
**प्रसङ्गापादनाद् बौद्धा माध्यमिका अतिष्ठिपन् ॥ ८१ ॥**
**सर्वविज्ञानतत्त्वानां मूलान्वेषणतत्पराम् ।**
**प्रैरयत धियं प्लातो ज्ञानसूर्यदिदृक्षया ॥ ८२ ॥**
**विरोधपरिहारेण स्वप्रकाशात्मप्रत्यये ।**
**लीयन्ते प्रत्ययाः सर्व इति हेगेलनिश्चयः ॥ ८३ ॥**
**इतिहासक्रमेणैव जायन्ते तत्त्वनिश्चयाः ।**
**तत्तदाग्रहसापेक्षाः परस्परविरोधिनः ॥ ८४ ॥**
**इति मार्क्समतं यत्तु प्रसिद्धिं परमां गतम् ।**
**सर्वेष्वेव मतेष्वेषु प्रतिष्ठा नाप्यते क्वचित् ॥ ८५ ॥**
**लक्ष्याणां प्रत्ययानां वा नाशेषज्ञानसम्भवः ।**
**अद्वयपरमार्थो हि द्वयबुद्ध्या न गाह्यते ॥ ८६ ॥**

यद्यशेषतत्त्वप्रत्यया विदिताः स्युस्तदालोचनेन तत्तद्दोषपरिहारेण सर्वसङ्ग्राहकः कश्चिन्महातत्त्वप्रत्ययः लब्धः स्यात् । यस्तु सदिति प्रत्ययः सर्वानुगततया कल्पितः स व्यावृत्ताशेषत्वादसत एव विशेष्यो न भवतीत्युक्तमभियुक्तैः* । एतादृशा अनुगता व्यावृत्त्यात्मकास्तु प्रत्यया निर्विशेषज्ञापकतया न कस्यचिदपि सङ्ग्राहका भवन्ति । न हि परित्यक्तविशेषाणि सामान्यानि विशेषमवबोधयितुं समर्थानि । न हि

*. द्र. हेगेल, पूर्व. पृ. 106-107.

गोत्वघटत्वादिव्यावृत्तय उत्सर्गसूत्रवद् व्यवहारोपयोगिन्यः । अतः परमतत्त्वरूपेण निर्धारितं सत् स्वयं निर्विशेषं कथं विश्वमूलं स्याद् "यस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवति" । सविशेषं च सद् गुणकर्मविशिष्टं द्रव्यमित्येवावसेयम् । द्रव्यप्रत्ययस्तु प्रसङ्गाहतः, धर्मधर्मिणोरन्योन्यापेक्षत्वात्, धर्मिणश्च धर्म-व्यतिरेकेणानुपलब्धेः । एवं च प्रतीतिविषयमात्रनिरूपकाः प्रत्यया न तात्त्विकाः । एष्टव्यस्तु सविशेषसामान्यज्ञापकप्रत्ययश्रेण्यां समर्थतमः प्रत्ययः । परमतत्त्वं विषयतयाध्यवस्यन्तस्तन्निरूपकेषु प्रत्ययेषु व्यापकतमाद् अविशेषात् सत आरभ्य विशेषसमृद्धिमन्विष्यन्तो विशेष्यविशेषणतावगाहकेषु द्रव्यत्वहेतुत्वादीन् प्रत्ययान् उपलभामहे । सर्वं चैतत्प्रत्ययजातं विषयभूतस्य सत एव विस्तारः । न त्वनेन विषयिणो ज्ञानस्य तदव्यतिरेकिणां च धर्माणां निरूपणं शक्यम् । ननु केचिद् ज्ञानं गुणत्वेन कर्मतया वा कल्पयन्तस्तदाश्रयतया आत्मानमपि द्रव्यतया कल्पयन्ति । एवं च ज्ञानमात्मापि द्रव्यगुणकर्मादिसत्प्रभेदनिरूपकैः प्रत्ययैः सम्यक्प्रत्येतव्याविति चेत्, नैवं ज्ञानस्य आत्मनो वा स्वरूपं बोद्धुं शक्यं प्रत्युत ज्ञानात्मानावपि स्वरूपात् च्यावितौ जडविषयीकृतौ स्याताम् । विषयविषयिविवेकपुरस्सरं च विचारस्तत्त्वजिज्ञासया प्रवृत्तस्तटस्थजडविषयताप्रकारमात्रपरिच्छेदके प्रत्यये न विश्राम्यति साक्षिभास्यत्वसारश्च विषयो न स्वतन्त्रतयावस्थातुं समर्थः । यथा यथा च विषयस्वरूपं बुध्यते तथा तथास्य प्रत्ययो व्यापकतरो भूत्वा बाह्यार्थान्वयसूत्रमुपजायमानं विषयिप्रतिबिम्ब इवाभाति । ज्ञानसुखधर्मादिपदार्थानां तु प्रत्ययो नात्मपरामर्शं विना आत्मसम्बद्धतानुभवेन विना वा समुपजायते । एवं सम्यग्ज्ञातो विषय आत्मज्ञानस्य द्वारायते । एवम् आत्मन्येव महाप्रत्यये सर्वप्रत्ययोपदर्शिनि तत्त्वविचारो विश्रान्तिं गच्छेदिति युक्तम्* । परमेऽपि आत्मवादे आगमाश्रिते बहुविधा अनात्मपरमा दृष्टयः प्रत्यक्षाश्रितास्तर्कनिबन्धना वा प्रवर्तमाना न निवार्याः, तद्दोषा हि तर्कोद्भाव्या अपि चिराभ्यासपाटवात् दुस्त्यजाः । प्रत्यक्षादितत्तत्प्रमाणाग्रहवशाद् भूतभौतिकचित्तचैतसिकजीवात्मपरमात्मनां परमार्थ-

---

*. द्र. तत्रैव, पृ. 194-95.

त्वाभ्युपगमाद् नानादृष्टयः प्रचारमागताः सौन्दर्यबुद्धिमीमांसां प्रयोजयन्ति । ततश्च तासां मीमांसानां दृष्टिसापेक्षत्वं तदालोचनसूत्रं च प्रज्ञात्मकमुपलभ्यते ।

देशकालभेदेन प्रचलितानि नानासौन्दर्यदर्शनानि लक्ष्यभेदापेक्षीणि दृष्टिभेदापेक्षीणि च इतिहासन्यायोभयसमन्वयिन्या निषेधद्वारेणान्ते परमविधिप्रस्ताविन्या प्रज्ञया विचार्याणि । अन्तग्राहिणी दृष्टिः विरोधिद्वन्द्वानि विकल्पयति, अद्वयं च परमार्थम् आच्छादयन्ती संवृतिरित्युच्यते । मध्यग्राहिणी तु प्रज्ञा अन्तर्गर्भितनिषेधं स्वभावं निषेधन्ती निर्विकल्पमिवात्मानं कवलीकृताशेषविकल्पं विवृणोति । एवं चानादिसिद्धव्यावृत्तिनिषेधेन स्वरूपविधिरेव प्रज्ञया समर्प्यते प्रहीयते च दृष्टिः । अनेनैव प्रज्ञासूत्रेण व्यवस्थाप्यानि सौन्दर्यदर्शनप्रस्थानानि येन दृष्टिप्रवृत्तिभिरुपरक्तेभ्यो लक्षणगवाक्षेभ्यो लक्ष्यमूर्तो विवेच्यः सौन्दर्यबोधः ।

ननु किमिदं सौन्दर्यं नाम यद्विषया प्रक्रान्ता एतावताटोपेन मीमांसा । उच्यते–

**आस्वाद्यो ज्ञानमात्रेण विमृश्यश्च स्वरूपतः ।**
**आकारगतोत्कर्षस्तत् सौन्दर्यमभिधीयते ॥ ८७ ॥**

तत्राकारो विषयग्राहकज्ञानप्रकारनियामको विषयनिष्ठो धर्मः । क्वचिद् यथाभिधर्मे चाक्षुषरूपाभिन्नं वर्णव्यङ्ग्यं वर्णातिरिक्तं धर्ममाकारं संस्थानं वाचक्षते । पदार्थं वा जातिव्यक्तिभिन्नं नैयायिका आकृतिरित्याचक्षते । आधुनिकास्तु तार्किका अवयविमात्रेऽवयवसम्बन्धात्मिकां रचनामेव आकारमभिदधति, तं पुनर्द्रव्येषु वाक्यार्थेषु ज्ञानेषु च लक्षयन्ति । एवमवधारित आकारो नैयायिकानामाकृतिसामान्यप्रकारानन्तर्भावयति । तथापि स्वलक्षणं न व्याप्नोति । नीलक्षणप्रतिभासो हि जात्यादिभिरविकल्प्यमानोऽपि विलक्षण एवोपतिष्ठते । अस्त्येव तत्र प्रकारो वैलक्षण्यहेतुः, तत्सरूपश्च तद्विषयाकारः । एवं ज्ञानप्रकारनियामकः स्वसामान्यलक्षणात्मको धर्म एवाकार इति मन्तव्यम् ।

ननु व्यवहार्यवस्त्वभिज्ञाने तत्स्वरूपावधारणे च ज्ञापकतया लक्ष्यमाण आकारो न विषयतादात्म्यमतिक्रामति, विषयाकारयोरन्योन्यनियतत्वात्, न च विशुद्धविकल्पात्मका व्यावृत्त्यात्मका वाकारा विषयाद् भिन्ना इति वक्तव्यं तादृशाकाराणां सद्विषयानारोप्यत्वे स्वयमप्यसद्विषयत्वाद् एवं च विषये वक्तव्ये तदाकारकथनमपार्थकमिति चेन्न।

वस्तुसद्विषयातन्त्राणां सम्भावनामात्रसाराणामाकाराणामत्र विवक्षितत्वात् तादृशाकारा हि सत्यासत्यत्वेनानिर्धारितप्रतिभासमात्रालम्बनाः कल्पनामात्रालम्बना वा सम्भाव्यानेवार्थानाक्षिपन्ति न वस्तुसतः। सौन्दर्याख्य उत्कर्षोऽप्येवं प्रतीयमानतयैव मुख्यतया द्रष्टव्यो न वस्तुधर्मतया। काव्यमीमांसायां राजशेखरवचनमत्र उद्धरणमर्हति। "न स्वरूपनिबन्धनमिदं रूपमाकाशस्य सरित्सलिलादेर्वा किन्तु प्रतिभासनिबन्धनम्। न च प्रतिभासस्तादात्म्येन वस्तुन्यवतिष्ठते। यदि तथा स्यात् सूर्याचन्द्रमसोर्मण्डले दृष्ट्या परिच्छिद्यमानद्वादशांगुलिप्रमाणे पुराणाद्यागमनिवेदितधरावलयमात्रे न स्त इति यायावरीयः"[11] । इति। इदमत्र अवधेयं शास्त्रे प्रतिभासविवेचनाद् यथार्थोपलब्धिरीप्सिता, काव्यादौ तु यथाप्रतिभासमेव प्रायेणार्था निरूप्यन्ते भावानुरूप्येण विकल्पिताः। प्रतिभासकल्पनादीनां स्वरूपं विवेचयिष्यते। अत्र वस्त्वनियताकारेष्वेव आत्मभावानुरूपेषु सौन्दर्यप्रतीतिर्विश्राम्यतीत्येतावदेवोक्त्वा विरम्यते।

काव्यकलादिव्यङ्ग्या मूल्यात्मानोऽर्था यया कल्पनया रच्यन्ते सा भावविषयिणमात्मानमेवोद्दिश्यालिखति तदालम्बनाकारान् सौन्दर्याधिष्ठानवत्प्रतिभासमानान्। सोपाधिकात्मपरामर्शादेव सम्भवति भावः, ततश्च कल्पनापि स्वानुरूपमाकारमालिखन्ती मनःपटे। त्रिधाऽयं परामर्शो मुख्यतया ज्ञेयः। आत्मानम् इन्द्रियमनोऽधिष्ठातारं बुध्यमानः प्रत्यक्षसिद्धानि प्रेयांसि वरयति कामलोकाकारानेव च कल्पयति। इदं प्रथमं परामर्शस्थानम्, यत्र अन्नप्राणमनोमया उपाधय आत्मबोधस्य मुख्या मताः। बुद्धिसत्त्वमेव पुरुषं बुध्यमानो विषयाकारेषु तत्त्वाभासान् प्रेक्षमाणो

बुद्धिसङ्गत्यैव सौन्दर्यादिमूल्यानि व्याचक्षाणो द्वितीयमाप्नोति आत्मपरामर्शस्थानम् । तृतीयस्थाने अध्यात्मसारः पुरुष इति श्रद्धा कमप्युदात्तमर्थमुपनयति लोकातिक्रान्तं मूकास्वादनवदनिर्वाच्यम् ।

आत्मबोधप्रकारसम्भूता मुख्यास्तिस्रो दृष्टयः प्रत्यक्षवादो विज्ञानवादोऽध्यात्मवाद इति व्यपदेष्टुं शक्याः । काव्यकलादिषु दर्शनप्रस्थानेषु सौन्दर्यशास्त्रे च तदनुगामिनो भेदा उपलभ्यन्ते । ऐतिहासिकः क्रमस्त्वेतेषां विपरीत एव लक्ष्यते । संस्कृतीनां प्रारम्भिकेषु युगेषु परममूल्यबोधः अध्यात्मप्रधानतया आविर्भवतीति दृश्यते । अतीतसभ्यतासु उत्तमार्थबुद्धिः दिव्यत्वबुद्धिनिबन्धनैवास्फुरत् । देवशक्तिः मनुष्योत्तरा अमर्त्या शुभा शोभमाना नानारूपधारणसमर्था सृष्टिनियामिका मनुष्यैरुपास्या च । तद्रूपतयैव जागतिका अर्थाः सत्त्वं प्राशस्त्यं सौन्दर्यं वा भजन्ति । देवव्रतविधृता एवाद्याः प्रतिमानभूताः सनातना धर्मा विधारकत्वाद् रूपाणाम् आचाराणां च । देवशक्त्यभिन्नसङ्कल्पात्मकमृतं नियामकं व्यक्तरूपाणामव्यक्तमूलधर्मादर्शेन । धर्मनियतत्वमेव नामरूपकर्मात्मकस्य जगतो युक्तत्वमर्थवत्त्वं मूल्यवत्त्वं वा । स्वान्तर्यामिप्राणभूतमृतं स्वाकारतो व्यञ्जयन् दृश्यविषयः सौन्दर्यमावहन् शोभते ज्योतिर्मयमिव रूपम्[12] ।

नन्वाधिदैविक्येवैषा दृष्टिर्न त्वाध्यात्मिकीति चेन्न, देवानामात्माभिन्नत्वेन अभ्युपगतत्वात् । तथा च श्रूयते—"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा", "कतम एको देव इति प्राण इति स ब्रह्म त्यदित्याचक्षते" इति, भगवान् शङ्कराचार्यश्चात्र व्याख्यत्—स प्राणो ब्रह्म सर्वदेवात्मकत्वाद् महद् ब्रह्म....देवस्यैकस्य नामरूपकर्मगुणशक्तिभेदोऽधिकारभेदाद्" इति । स एवैको देवः परमात्मा सर्वान्तर्यामी सर्वव्यापी सर्वातिक्रामी च पुरुषः । "पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यमित्यादि"श्रुतेः । तदन्तःप्रविष्टत्वात् तदाभासाच्च सर्वाणि रूपाणि विभान्ति, "तस्य भासा सर्वमिदं विभातीति" श्रुतेः, "यच्चापि सर्वभूतानां बीजं तदहमर्जुन । न तदस्ति विना यत्स्यान्मया

भूतं चराचरम् ॥........ यद्यद् विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्" ॥ इति च स्मृतेः । तथा चांपार्थिकैवात्राध्यात्मिकाधिदैविकयोर्भिदा । दृष्टलोकमतिक्रम्य तद्व्याप्य च स्थितं परमं सत्यं सृष्टिमूलं मानवानां परमोपास्यम् । तदाभासादेव दृष्टजगतः सौन्दर्यम् ।

कथं त्विदं सौन्दर्यं काव्यादिषु निरूपणीयं येन तन्मूलस्यावगतिः स्यात् । दृष्टमेव रूपं चेदनुक्रियते तदाभासाभास एव स्यात् । कथमन्यथा रूपाणि अरूपधर्मप्रभामाभासयेयुः ?

---

**पादटिप्पण्यः –**

1. सामान्यतया द्र. बर्नर्ड बोसेंके, **हिस्टरी ऑव ईस्थैटिक** (लन्डन, १९०४), बोसेंके, **हेगेल - इन्ट्रोडक्टरी लैक्चर्स ऑन ईस्थैटिक्स** (पेंग्विन, १९९३), पृ. ९८.
2. द्र. धर्मकीर्ति, **न्यायबिन्दुः** (पटना, १९९५).
3. तु. हाबेरमास, **फिलसौफिकल डिस्कोर्स ऑव मौडर्निटी** (अनु. १९८७).
4. द्र. जावेट (अनु.), **डायलौग्स ऑव प्लेटो, फ्रेड्रस, इयॉन, सिम्पोजियम**; टेलर, **प्लेटो** (१९६०), पृ. २७९-८०, २२९-३१.
5. द्र. कुमारस्वामी, **सैलेक्टेड पेपर्स** (सं. लिप्से), भूअर एन्ड कुमारस्वामी, (सं.) **सैलेक्टड लैटर्स ऑव कुमारस्वामी** (१९८८), कुमारस्वामी, **ए न्यू एप्रोच टु द वेदाज़** (१९३५).
6. ऐ. ब्रा. ग्र. २. पृ. ७६४ (आनन्दाश्रम.)
7. तु. हयूम, **ए ट्रीटिज़ ऑव ह्यूमन नेचर** (पेंग्विन, १९६९), पृ. ३४९ प्र.
8. तु. कान्ट, **क्रिटीक ऑव जजमेन्ट** (अनु. बर्नर्ड, लन्डन, १९३१), पृ. १९७ प्रभृति.
9. तु. **ज्ञानश्रीमित्रनिबन्धावली** (पटना, १९८७), पृ. ३६७ प्र.
10. तु. ए.ई. टेलर, **पूर्व.** पृ. २९१ प्र., चार्ल्स टेलर, **हेगेल** (१९७५), पृ. २२५ प्र. हेगेल, **एन्सिल्कोपेदी** (हाम्बुर्ग, १९६९), पृ. १०२ प्र. ; कोलाकाव्स्की, **मेन करेन्ट्स, ऑव मार्क्सिज्म**, प्रथमे भागे, अध्यायाः १,१४,१५.
11. राजशेखर, **काव्यमीमांसा** (पटना, १९५४) पृ. ११०.
12. श्रीमदरविन्दानिर्वाणकपालिशास्त्रिभिः एतादृशं विवरणं वैदिकदृष्टेः बहुत्र सप्रमाणमुपन्यस्तम् ।

●

# रूपतत्त्वविमर्शः

**सौन्दर्यविषयोत्पत्तिविनाशौ व्यक्त्यपेक्षया।**
**आकारो व्यञ्जको हेतुराभासान्न तु वस्तुतः ॥ १ ॥**

चन्द्रोदयश्चित्तमाह्लादयति, तच्चित्रमपि तथा करोति। तत्कथं चन्द्रोदय-सौन्दर्यं चन्द्रोदयचित्रसौन्दर्याद् भिद्यत इति विचार्यमाणे स्थिरत्वास्थिरत्व-कृतस्तयोर्भेदः सुविदित एव प्रथमत आलोच्यः। भौतिकरूपरचनाहेतुषु परमाणुपर्यन्तेष्ववयवेषु निरन्तरं सञ्चलत्सु रूपप्रदर्शके कालविधायके भुवनभास्करे च परिस्पन्दमाने न नैसर्गिकं दृश्यं तथैव तिष्ठति, चित्रितं तु शाश्वतायते, "रम्यं प्रहर्षजनकं भवतीह नित्य"मिति हि प्रसिद्धं वचनं कवेः। ननु नश्यन्ति चित्राण्यपि, दृश्यानि पुनर्नवीकुर्वन्ति स्वात्मानम्, नापि स्थिरत्वास्थिरत्वं प्रयोजकं सौन्दर्यस्य, तथा हि शरच्चन्द्रचट्टोपाध्याय-महाकवयः स्वकीयकथायां **'शेष प्रश्न'** इत्याख्यायां निदर्शयामासुः, पण्डितवर्याश्च रामावतारशर्माणोऽप्रयोजकमाहुः नित्यत्वानित्यत्वं सदसत्त्वे। इति न शङ्कनीयम्, चित्रनाशो हि पटवर्णद्रवादिलेखनसामग्रीनाश एव, न चित्रबुद्धेः। तथा च पाण्डुलिपेर्नाशोऽपि न स्यात् कस्यचित्काव्यस्य। विस्मृतेऽपि काव्ये न तन्नष्टमिति वक्तुमुचितं पुनरपि तस्य स्मृतिविषयता-पत्तिसम्भवात्। एवं च प्रातिभबुद्धेः साक्षादगोचरोऽर्थस्तत्संकेतभूताद् बाह्याकारजाताद् विवेचनीयः। बाह्यसंकेतस्तु कृतकत्वाद् तथैवानित्यो यथा प्राकृतहेतुकृतं दृश्यम्। प्रातिभोऽर्थस्तु नित्य एव सन् व्यक्तिमव्यक्तिं वोपेयाद् हेतुसंनिधानासंनिधानाभ्याम्। यत्तु नवीकरणं बाह्यदृश्यस्य तद् नवीनदृश्यकरणमेव, न तु पूर्वदृष्टस्य तस्यैव पुनः करणम्। नन्वेवं सति नैसर्गिकेष्वपि दृश्येषु कश्चिद् व्यक्तियोग्योऽर्थः कल्प्यताम्, पुनराविर्भावश्च दृश्यानां सनातनकवेः रम्यत्वस्वरूपानुसारं नवत्वविधानम्, तथा हि "नवो नवो भवति जायमानः", "तदेव रूपं रमणीयतायाः क्षणे क्षणे यन्नवतामुपैति,"

"याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः" । इति चेदोमिति ब्रूमः, यतस्तथा कल्पने सौन्दर्यस्य व्यङ्ग्यत्वपक्षेऽभ्युपगते, तस्य आकारदतिरिक्तं प्राकृतकार्यत्वम् औपाधिकमेव सिद्ध्यति ।

**सौन्दर्यबुद्धेः प्रामाण्यं स्वानुभूतिनिबन्धनम् ।**
**स्फुरत्यतिशयः कश्चित् संङ्केतरचनाश्रितः ॥ २ ॥**

अस्ति कश्चिदर्थः प्रतिभासाक्षात्कार्यो यच्चमत्कारितैव सौन्दर्यमित्यभिधीयते। न ह्ययं धर्मः प्राकृतैर्हेतुभिः क्रियते, व्यज्यते तु सङ्केतैः । अनेनास्य सहृदयबुद्धिसमाश्रयता सातिशयाकारालम्बनता च सूच्यते । ननु कवीनां शिल्पिनां वा व्यापारो निर्माणरचनाकर्मादिशब्दैरभिधीयमानः कथं कस्यचिद् नित्यार्थस्य ज्ञानाभिव्यञ्जनात्मकः प्रधानतया स्यात् । निरङ्कुशा हि कवयः प्रसिद्धाः शिल्पिनोऽपि नूतनकल्पनाकुशंला अपूर्वमेव वस्तु निर्मिमते । तत्कथमेतद् तद्व्यापारस्य ज्ञानप्रधानत्वे संगच्छेत । आधुनिका अपि सौन्दर्यं ज्ञानविषयेतरं कल्पनासारमवस्तु विख्यापयन्ति । ज्ञानविषयश्चेत् सौन्दर्यमभविष्यत् तत्र वैमत्यम् असमाहितमेव नास्थास्यत् । वस्तु चेदभविष्यत् प्रमाणैरन्विष्टं यथाभूतं न्यरूपयिष्यत[1] ।

अस्य प्रतिवचनं विधीयते । अभ्युपगम्यत एव कवीनां शिल्पिनां च क्षेत्रविशेषे स्वातन्त्र्यम् । तथा हि स्वान्तःस्थार्थस्य स्वसंस्कारानुकूलैः व्यञ्जकसङ्केतैः बहिःप्रकाशने ते स्वतन्त्रा एव । तथापि न निरङ्कुशाः, अन्तःस्थार्थस्यैव आनुकूल्यस्य सङ्केतरचनायां विवक्षितत्वात्[2] । स्वान्तःस्थार्थाश्च मानसप्रत्यक्षगम्याः । मानसप्रत्यक्षमपि द्विविधम् । सन्ति अर्था आत्मगता इच्छादयो ये मानसप्रत्यक्षगोचराः । पुनश्च सन्ति आगमादिलब्धा अपि अर्था भावनाजन्यसाक्षात्कारविषयाः । एवञ्च स्वानुभूता अपरोक्षार्था भावनासाक्षात्कृताश्च अर्था उभयविधा अपि अन्तःस्थार्थकक्ष्ये प्रवेश्याः । उभयथा चं ते प्रमाणसमर्थिता एव । तेषां प्रकाशनेऽपि यत्र स्वानुभूता अर्थास्तत्र व्यञ्जकसङ्केतानां रचना सहजसंस्कारानेव मुख्यतया आश्रित्य प्रवर्तते, यत्र तु लोकोत्तरा अर्था आगमादिनिर्दिष्टा विवक्षितास्तत्र व्यञ्जकरूपमपि शास्त्रनिर्देश्यं भवति । यथा–देवानां नामरूपचरितादिनिरूपणाऽवसरे ।

**परोक्षार्थः कथं व्यङ्ग्यः शास्त्रनिर्देशमन्तरा ।**
**रूपनिर्माणविज्ञानं कलेति व्यपदिश्यते ॥ ३ ॥**

कथं सर्वथापि अरूपो देवो धर्मो ज्ञानं वा प्रत्यक्षेण रुपेण प्रकाश्यमिति तु शास्त्रत एवावगन्तव्यम् । अतो देवप्रतिमादिविधानसमर्था कला न शिल्पिनः स्वायत्तैव भवति । सा तु विज्ञानरूपा शास्त्रीयसम्प्रदायलभ्या "अमुकस्यैव देवस्य इदं रूपम् इमानि प्रमाणानि" इत्याद्यात्मिका । तथा च "विज्ञानं शिल्पशास्त्रयोः" इति अमरोऽप्याह । इदं तु स्मर्तव्यं यत् शास्त्रनिर्देशज्ञानमात्रेण शिल्पविषयः अन्तस्थार्थपदवीं नारोहति । शास्त्रोक्तोऽर्थः प्रथमं भावनया साक्षात्कार्यः, तत एव स बहिः प्रतिमायतनादिरूपेण निष्पाद्यो भवति ।

**व्यङ्ग्यव्यञ्जकभेदेन कलाकाव्यादिषु स्फुटम् ।**

**तत्त्वयोर्लक्ष्यते भेदो युगनद्धतया स्थितः ॥ ४ ॥**

निर्गलितार्थस्तु अयं यत्काव्यशिल्पादिषु अस्ति पक्षद्वयम् । एकतस्त्वान्तरः कश्चिदर्थः साक्षात्कारविषयः, अपरतश्च बाह्यं तस्य व्यञ्जकं रूपं सङ्केतरचना वा । अयं च द्विविधो विभागः सर्वत्रैव कलासु नैसर्गिकदृश्येषु च लक्ष्यः । नैसर्गिकदृश्येष्वपि अव्यक्त एव कश्चिदर्थः प्रेक्षकभावानुरूपः चमत्कारितया अवस्थितो लक्ष्यते । तथा हि–

**शुचिशीतलचन्द्रिकाप्लुताः**
**चिरनिःशब्दमनोहरा दिशः ।**
**प्रशमस्य मनोभवस्य वा**
**हृदि कस्याप्यथ हेतुतां ययुः ॥**

अथवा–

**न जाने नक्षत्रों से कौन**
**निमंत्रण देता मुझको मौन ।**

ननु एतादृशानि काव्यानि उत्प्रेक्षाविशेषद्योतकान्येव, न तु तथ्यप्रमाणभूतानि । तथा पाटलकुसुमं विलोक्य सौन्दर्यम् अनुभवन्तो न तत्र कञ्चिद् अव्यक्तम् अर्थमनुभवन्ति, रूपसौष्ठवमात्रं तु पश्यन्ति । तदेव

प्रशंसन्ति । तथा च स्वभावोक्तिषु पुरुषविशेषरूपचित्रणे प्राकृतदृश्यालेखने निश्चलदृश्यचित्रणे वा उत्प्रेक्षाद्यलङ्काररहिततयैव यथास्थितमेव विषयः प्रतिरूप्यते । संगीतेऽपि श्रुतिमात्रेण गृह्यते स्वरमाधुर्य भावनिरपेक्षतयैव, न च तत्रार्थः कश्चिद् विवक्षितो ग्राह्यो वेति चेत्, न, सहृदयेषु स्वानुभूतिप्रकाशनमन्दानामुदाहरणेन न भ्रमितव्यम् । ये पुष्पं वीक्ष्य अहो रूपम् इत्येव वक्तुं क्षमास्ते कमपि अर्थं न गृह्णन्ति इति न वक्तव्यं प्रत्युत ते स्वगृहीतम् अव्यक्तमर्थं न प्रकाशयितुं क्षमा इत्येव वक्तव्यम् ।

**सौन्दर्यजनिताह्लादः सुखान्तरविलक्षणः ।**
**समालोच्यविशेषोऽपि मूकास्वादसमोऽन्ततः ॥ ५ ॥**

सौन्दर्यं दृष्ट्वा सर्व एव अव्यक्तं कमपि अर्थं गृह्णन्ति न तु सर्वे स्वगृहीतमर्थं प्रकाशयितुं शक्नुवन्ति । तथा च सर्व एव क्वचित् कलाकृत्पदवीम् अबोधपूर्वम् आरोहन्ति, तत्र स्थिताश्च सौन्दर्यं प्रेक्षन्ते, न तु तत्पदवीयोग्यं कार्यम् अभ्यस्ताधिकाराभावात् संपादयितुं क्षमाः । यथा कश्चिद् "बच्चासक्का" इत्याख्यः (चर्मदृतिसेचकः कुमारः) सम्राड् अभवत् । न च स तत्पदयोग्यताम् अधिकृतवान् । ततश्च तेन कर्तव्यान्तरं विहाय स्वनामाङ्किताः चर्ममुद्राः प्रचारिताः । एवमेव अकविरपि बहिःसौन्दर्यम् आलोक्य प्रशंसति, न तु तद्भावं गृह्णाति, गृहीत्वा वा न तद् व्यङ्क्तुं क्षमः । एवञ्च नैसर्गिकं सौन्दर्यं न भौतिकवस्तुनिष्ठम्, तद्धि औपाधिकमेव चेतनापेक्षं च । केचिद् एतादृशं धर्मं गुणान्तरापेक्षया प्रतीयमानो धर्म इति व्यपदिष्टवन्तः । स्वभावोक्तिर्यथास्थितनिदर्शनपरं वा चित्रणं दृश्यविषय-प्रतीतिविशेषमेव द्योतयति, न हि स्वभावोक्तिः इतिवृत्तवचनमेव नापि चित्रं यथाकथञ्चिद् गृहीतमालोकचित्रमेव ।

**स्वभावादेव काम्यत्वं ननु रूपेषु दृश्यते ।**
**सहजं काममूलं तत् किं न चारुत्वमिष्यते ॥ ६ ॥**

ननु नैसर्गिकरूपसौष्ठवं प्रेक्षककल्पनारचितम् इति न वक्तुं युक्तम् । तस्य स्पष्टत एव बहिःस्थितत्वदर्शनात् । तथा हि मयूरपक्षरचनायां

वर्णवैचित्र्यं दृश्यते तद् मयूर्यापि आलोक्यते न च तस्याः काचिद् मानवबुद्धिसदृशी बुद्धिः कल्पना वा । अत्र दृष्टान्ते मयूररूपस्य आकर्षकत्वं मयूर्याः कल्पनारहिताया अपि सिद्धम् । तेन मयूररूपस्य वस्तुनिष्ठत्वमपि सिद्धम् । न च तद् रूपं काल्पनिकम् इति वक्तुं शक्यम् । तद्ग्राहिकाया मयूर्याः कल्पनाभावात् । एवं मनुष्येष्वपि स्त्रीपुरुषादिरूपाणि परस्परं सुन्दरतया विभाव्यानि निरुपाधिकतया स्वाभाविकानि इत्येव मन्तव्यम् । इति चेत् ।

**प्रवर्तनान्न सौन्दर्यं चमत्कारमयं हि तत् ।**
**जायतेऽतिशयज्ञानाद् योग्यसंस्कारपूर्वकात् ॥ ७ ॥**

न, हेतोः अनैकान्तिकत्वात् । मयूररूपं यन् मयूरीम् आकर्षति न मयूर्या तत्र सौन्दर्यं किञ्चिद् दृश्यते । मयूररूपं तस्याः कृते सहजसङ्केतायते । तथैव स्त्रीपुरुषेष्वपि यद् बहवो रूपं दृष्ट्वा आकृष्यन्ते तत्र रूपं सहजमेव कामनिमित्तं भवतीति न सौन्दर्यबुद्धिः कल्पनीया । एतादृशप्रवृत्तिनिमित्तभूतं न तथात्वेन सुन्दरमिति वक्तव्यम्, न हि प्रवर्तकत्वं सौन्दर्यलक्षणम् । तल्लक्षणं तु स्वविषयकज्ञानमात्रेण चमत्कारजनकत्वम् । एवं काव्ये कलासु बाह्येषु च नैसर्गिकेषु दृश्येषु सर्वत्रैवेदं चमत्कारत्ववत्वलक्षणं काव्यं शिल्पं च व्याप्नोति । तथा च काव्यमुद्दिश्य पण्डितराजैरिदमुक्तमिति सुविदितमेव[3] । तैः चमत्कारत्वमनुभवसाक्षिको जातिविशेषो व्याख्यातः आह्लादगतः । तदेव च लोकोत्तरत्वम् । एवं च लोकोत्तराह्लाद-जनकज्ञानगोचरता रमणीयतेति प्रत्यपादि । सा च यथा काव्यादिशब्द-प्रतिपाद्येऽर्थे लभ्यते तथैव संगीतस्वरेषु चित्रप्रतिमादिषु नाट्ये नैसर्गिकेषु च दृश्येषु । तथा च संगीतस्वरादिज्ञानं चमत्कारजनकं स्वविषयरमणीयताम-परोक्षीकरोति । विषयस्य बाह्यत्वमान्तरत्वं वा नैसर्गिकत्वं कृतकत्वं वा नात्र प्रयोजकम् । प्रत्यक्षग्राह्यतद्रूपगतोऽतिशयविशेष एव प्रयोजकः । स चातिशयः क्वचिदनादिसंस्कारवशाद् ज्ञात एव आह्लादविशेषं जनयति यथा ध्वनिस्वरवर्णादिगता विशेषाः । एतावतापि प्रत्यक्षभोगवत् सुखजनकेन व्यापारेण विषयस्य रमणीयताप्रतिपत्तिरापामरं जनानां प्रसिद्धैव । तथा च

रक्तकण्ठता गायिकायाः, अनुरणनं तन्त्रीनादस्य, मसृणकान्तिः पुष्पस्य, वर्णच्छटा सुरेन्द्रचापस्य, अनुप्रासः काव्यशब्देषु सहजमेव रञ्जयन्ति चित्तम् शिक्षिताशिक्षितसाधारणी चेयं रक्तिः विवेकनिरपेक्षप्राया रम्यत्वप्रतीतेरवमा भूमिः । अत्र विषयरूपमविवेचितमपि गृहीतमात्रं कारकहेतुवत् सुखं जनयति मृदुस्पर्शवद् मधुररसवद् वा ।

तथापि स्पर्शनरसनव्यतिरेकेण दृश्यश्रव्याणां विषयविशेषाणां प्रतीतिः चमत्कारसहकृतं स्वानुस्यूतमिव ज्ञानान्तरं जनयति ।

**दृश्यश्रव्येषु रूपेषु ज्ञानरक्ती समाकृती ।**
**हेतुरालम्बनं चैव न भिद्येते द्वयोरपि ॥ ८ ॥**

तन्त्रीझङ्कृतज्ञानं यत्सुखं जनयति न तन्निर्विषयमनुकूलसंवेदनमात्रमपि तु अव्यक्तविषयं ज्ञानं सुखविशेषसंप्रयुक्तम् । स्वतनयकण्ठध्वनिं श्रुत्वा रज्यते पुरुषः, कस्यचिदपि रक्तकण्ठध्वनिं श्रुत्वापि रज्यते, रक्तकण्ठगीतं श्रुत्वापि रज्यते, न चात्र सर्वत्र सदृश एव रञ्जनव्यापारः । स्वतनयकण्ठध्वनिश्रवणकाले न ध्वनिरूपसौष्ठवं विचार्यते, प्रातिस्विकवासनावशादेव तद्ध्वनिग्रहणं सुखसंवेदनं जनयति । रक्तकण्ठध्वनिप्रत्यक्षे ध्वनिगतः कश्चिदाकारनियतो विशेषो लक्ष्यते । तज्ज्ञानावच्छिन्ना च विलक्षणसुखप्रतीतिः, विलक्षणत्वं चास्य सुखस्य अनुकूलवेदनीयत्वातिरिक्तत्वेन श्लाघ्याकारविषयकापरोक्षज्ञानरूपत्वात् । रक्तकण्ठगीतश्रवणकाले पुनः कण्ठविशेषोत्तीर्णः स्वरगतविशेषः स्वरयोजनाविशेषश्च लक्ष्येते । बहुविधा चैवं रञ्जकता लक्ष्या, रक्तिहेतुतावच्छेदकं चात्र रक्तिविषयतावच्छेदकमेव । तथा च ज्ञाने लक्ष्यत एव, घटो यथा घटज्ञानस्य हेतुभूतस्तस्यालम्बनप्रत्ययोऽपि, एवमत्रापि स्वसंबद्धता, कण्ठरक्तता, स्वरविशिष्टता, स्वरयोजनाविशिष्टता वा रक्तिविषयं निर्धारयति । निर्धारणहेतुः विषयगताकारवैशिष्ट्यज्ञानमेव । प्रथमतोऽस्यान्येभ्योऽवच्छेदकेभ्यो भेदोऽवधेयः । यदि स्वतनयोऽपि विस्वरं गायेत्, न तद्रक्तिमावहेत् । तेन रक्तिहेतुर्विषयाकारगत एवेति सिद्ध्यति । तेन काव्यकलाद्यास्वादस्य प्रथमारम्भो रूपपर्यालोचनमेवेति च ज्ञायते ।

सौन्दर्यबुद्धेः मूलभूतं रूपतत्त्वमेवादौ जिज्ञास्यते । तत्त्वजिज्ञासायाः शब्दार्थविचारादस्वतन्त्रतया तत्त्ववाचकशब्दप्रयोग एव प्रथमं परीक्षणीयः ।

**अर्था रूपादिशब्दानामप्रत्यक्षा अतर्कजाः ।**
**ऐतिह्यतत्त्वदर्शिन्याः प्रज्ञाया गोचरास्तु ते ॥ ९ ॥**

सौन्दर्यरूपादिशब्दानां प्रयोगस्य लोकशास्त्रयोरुभयत्र विदितत्वान् न तदर्थविनिश्चयः सुकरः । घटादिबाह्यार्थाः लोकप्रत्यक्षतः समवायादयः शास्त्रीयाश्च कल्पनारूढाः पदार्थास्तत्तत्सम्प्रदायप्रसिद्धतर्कतो बोद्धुं शक्याः । सौन्दर्यरूपादिपदार्थास्तु उभयविलक्षणा अप्रत्यक्षा अतर्कनियताः सर्वविद्या-कलाचारादिसंग्राहकचैतन्यपारम्पर्यसूत्रविधृता इव नैतिह्यमनालोच्य सम्यग् बोद्धव्याः । नानासंस्कृतिसिद्धानुभवनिरूपकप्रत्ययानां च तेषां विमर्शः "द्वन्द्वात्मकप्रज्ञयैव" कर्तुं शक्यः । सैव ऐतिह्यान्तर्दर्शिनी अनेकान्तवादिनी मध्यग्राहिणी प्रज्ञा अत्र रूपतत्त्वालोचने समाश्रयणीयेति युक्तं प्रतिभाति ।

ननु कोपयोगिता इतिहासस्य अनियतवृत्तान्तस्य तत्त्वविचारे न्यायैकशरणे, इति चेत्, न, तत्त्वविचारो हि सदा प्रसिद्धं दृष्टान्तं पूर्वपक्षं च आगमय्य प्रवर्तते, तत्र सम्प्रदायत एव प्रायेण दृष्टान्ताः पूर्वपक्षाश्च लभ्यन्ते, नानासम्प्रदायाश्च मिलिताः शिष्ट-पारम्पर्यात्मिकां संस्कृतिं संग्रथ्नन्ति । संस्कृतिसूत्रं चैतिहासिकम् अगत्यैवोपादेयं तत्त्वविचारे यथा सोऽपूर्णोऽसङ्गतो वा माभूदिति । तथा च शास्त्रकाराः पूर्वाचार्याणां मतानि स्मरन्ति, पूर्वपूर्वसोपानभूमिका आरुह्य तेषामुत्तरोत्तरमभिवर्धते ज्ञानम्[4] । एतावत्तु प्रायेण शास्त्रचर्चायां लक्ष्यत एव, यत्पुनरत्र नूतनं विवक्षितं तन् नयापेक्षवर्तिनो मध्यान्तविभङ्गोपमस्य "द्वन्द्वात्मकस्य" न्यायस्य आश्रयणी-यत्वम्[5]। तस्मिंश्च न्याये विचार्यतत्त्वानां स्वरूपकृतान्योन्यसम्बन्धस्तत्तदा-चार्यसम्प्रदायप्रतिपादितलक्षणसम्बन्धश्च पारम्पर्यपरिवेशसङ्गतौ तत्त-द्युगविवर्तिलोकसमष्टिचित्तविषयीकृतौ समानसूत्रधृताविव उभावपि समालोच्यौ भवतः । तर्कधिया येऽर्था नानाव्यावृत्तिभिस्तत्त्वात्मना कल्प्यन्ते नानाप्रसङ्गेषु नानानयानुसरणेन तन्मूलभूता विकल्पाः प्रतिबिम्बाश्च वाक्सं-दृब्धाः लोकेऽन्योन्यचित्तेषु निलीनाः वासनापेक्षाः शिल्पसम्प्रदायावतारि-ताद्भुतबिम्बनिमित्तस्मृतिसापेक्षाश्च । एवं च सौन्दर्यरूपादितत्त्वमीमांसायां

नानायुगचित्तारूढा अर्थास्तत्प्रतिष्ठाभूताश्च भावा आलोचनीया येन क्रमविवर्तिनः प्रत्ययाः सम्यगवबुद्धाः स्युः[6] । अन्यथा तत्त्वविचारः लक्ष्यविच्युतः आहार्यविषयायासिततर्कमात्रं स्यादप्रतिष्ठम् । विचारसरणि-भेदेऽपि हि दार्शनिकाः पदार्थाः लौकिकेभ्यो न भिद्यन्ते वाच्यवस्तुत्वाभावेऽपि विकल्पितस्वभावत्वात् । स्वतन्त्रबाह्यार्थवाचकतया प्रतीता गोघटादिशब्दा अपि, प्रत्ययान् प्रत्ययद्वारा सम्भावितांश्च प्रत्येयान् एवाभिदधते । कथमन्यथा तानर्थानुद्दिश्य तेषाम् असत्त्वं मिथ्यात्वम् असम्भाव्यत्वं वा विधीयेत । सामान्यभाषासङ्केतिता बहुजनचित्तगोचरा अनुभवविकल्पा एव तत्त्वविचारेण परिष्कृता भवन्ति । जनचित्तं च प्राकृतानां वा स्यात् शिष्टानां वा विशिष्टानाम्, प्रकृतं तु शिष्टजन-चित्तमेव । दार्शनिकानां विचार्या विषयास्तत्त्वनिरपेक्षतया यथा कथञ्चिद् बुद्ध्यारूढा उच्चावचा अर्था एवेति नात्राभिप्रेतम्, तेषां प्रत्यक्षप्रधानाद् वैज्ञानिकानुसन्धानाद् विषयभेदस्यैव विवक्षितात् । परम्परागतसंस्कारापेक्षं साधारणं चानुभवं परामृशन् स विचारस्तत्र लोकरूढानि मतानि समीक्ष्य लक्षणनिर्धारणेन लक्ष्याणि अवगाहते । विचारप्रधानत्वात् तस्य विषयाः प्रतीतिसंलग्नाः, न त्वागन्तुका बाह्यार्थाः । पुमर्थसंबद्धाश्च ते लोकशास्त्रोभयसम्प्रदायाद्गृहीत्वा विवेच्याः । अतश्च रूपतत्त्वान्वेषणेन विद्याकलाचारादिशिष्टसम्प्रदायानुरोधप्रतीतार्थपुरस्सरेण भाव्यम् ।

अभिधर्माचार्या रूपशब्दस्य प्रयोगं भूतभौतिकार्थपरतया विदधुः[7] । अन्योऽपि अस्यार्थः प्रायिकः चक्षुर्ग्राह्यगुण इति । स गुणो वर्णसंस्थानोभयात्मकः । प्रतीयमानाकृतिः स्वरूपं वा तत्त्वं वा अपि रूपशब्देन अभिधीयन्ते। क्वचित् पदार्थस्य अवयवसन्निवेशोऽपि रूपमित्युच्यते । येनावच्छेदेन कश्चिद् विषयो ज्ञायते तदपि रूपमेव । केनाऽपि स्वनिष्ठधर्मविशेषेण स्वाभाविकेन औपाधिकेन वा यस्य ज्ञानं विषयान्तरज्ञापकम्, सोऽपीतरस्य सङ्केतभूतो रूपशब्दाख्यः । तथा च प्रतिकृत्या अभिनयेन प्रतिमया वा रूपं प्रस्तूयते । क्वचिद् रूपं प्रशस्ये गुणेऽपि प्रयुज्यते, एवं च आकृतेः अतिशयोऽपि सौन्दर्यापरपर्यायो रूपम् इत्युच्यते । इत्थं रूपशब्दो वस्तुनिष्ठमपि धर्मम् अभिधत्ते प्रातिभासिकमपि, तटस्थमपि हानोपादानबुद्धिविषयमपि । सर्वथा च विवेच्यं वस्तुविषया

प्रतिभासविषया वा रूपसौष्ठवप्रतीतिः किंनिबन्धनेति । कोऽसौ रचनाविशेषः सम्बन्धविशेषो वा येन प्रतीयमानं रूपं सद् इति श्लाघ्यताम् अर्हति ।

**अव्यक्तं व्यज्यते यस्माद् विक्षेपावरणात्मकात् ।**
**रूपं तदिष्यते वेदे देवशक्तिनिबन्धनम् ॥ १० ॥**
**स्वातन्त्र्यात् सृज्यमानं तद् निगूढमवभासयत् ।**
**अभिप्रायप्रकाशात्मा सङ्केतः सहजो यथा ॥ ११ ॥**

वेदेषु रूपब्शब्दप्रयोगो विविधोऽपि गभीरं कञ्चिदर्थं द्योतयति । क्वचिद् दृश्यगुणार्थे अयं प्रयुक्तः । यथा–"घोषा इदस्य शृण्विरे न रूपम्", "रूपैरपिंशद् भुवनानि विश्वा" । नाम्ना नामकर्मभ्यां वा सह प्रयुक्तो रूपशब्दो व्यापकतरमर्थं सकलेन्द्रियाभासगोचरं भूतभौतिकविषयजातम् अभिधत्ते । तथा च नामरूपयोः बौद्धप्रयोगेष्वपि लक्षयितुं शक्यम् । "त्वष्टा रूपाणाम् ईशे" इत्यत्र रूपशब्दः स्वाभाविकीं शिल्पकृतां वा संरचनां ब्रूते । एवं विविधेष्वपि रूपशब्दप्रयोगेषु मुख्यः प्रयोगस्तु अभिव्यञ्जकत्वे एव तथा च यत् सृज्यते तद् रूपम् । रूपेणैव अव्यक्तं व्यज्यते, अनवधारितम् अवधार्यते । अलक्षणमसत्प्रायं निराकारमव्यक्तं सामान्यविशेषलक्षणान्वितं सद् व्यक्तत्वम् उपैति। अवयवसन्निवेशो रचनापरपर्यायोऽव्यक्तम् अवच्छिद्य अवयविविशेषतया तदाविष्कुरुते । न च जडोपादानवादाद् प्रधानवादाद् वा इदं न भिद्यत इति मन्तव्यं वेदाभिमतस्य हि व्यवहारानुगुणमिदम् एकदेशमात्रम् । प्रायेण वेदेषु सदर्थो जड़ावच्छिन्नविषयाद् भिन्नश्चेतनविषयी एव, विषयविषयिभावातीतं चैतन्यं वा । चैतन्याभिन्नं सत् स्वयमात्मानं सृजति । रूपाणि तत्स्वरूपम् आवृण्वन्ति आभासयन्ति नानापरिच्छिन्नान् अर्थान् । एषैव सृष्टिमूलभूता आवरणविक्षेपात्मिका प्रसिद्धा मायाशक्तिः । तथा च "इन्द्रो मायाभिः पुरुरूप ईयते" इति ।

"रूपं रूपं मघवा बोभवीति मायाः कृण्वानः तन्वं परिस्वाम् ।" "रूपं रूपं प्रतिरूपो बभूव," "तद्धेदं तर्हि अव्याकृतमासीत् तन्नामरूपाभ्याम् एव व्याक्रियत । एतद्धि नामरूपाभ्याम् एव व्याक्रियते" "त्रयं वा इदं नामरूपं कर्म," "अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्" इति वा ।

इदमेव श्रौतं दर्शनम् अनुसृत्य उत्तरकालेऽपि वेदान्तेषु नामरूपे ईश्वरोपाधितया प्रतिपादिते। उपाधिर्हि तटस्थं लक्षणम्। स लक्ष्यं ज्ञापयन्नपि न तत्स्वरूपमाचष्टे। नामरूपात्मकेन व्याकरणेन जगद्विधाय तत्रानुप्रविष्टः परमात्मा। सृष्टाश्च सर्वे पदार्थास्तस्य मायिकानि रूपाण्येव निगूढात्मनः सङ्केता इव। एवं च ईश्वरः कविः, तत्सृष्टिश्च काव्यम् इत्यभिदधे।

**"पश्य देवस्य काव्यं न ममार न जीर्यति,"**
**"कविर्मनीषी परिभूः स्वयंभू –**
**र्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः"।**

प्रयोगस्यानया मुख्यया दिशा संसृष्टं प्रयोगान्तरम्। यथा–"दीक्षायै रूपं शष्पाणि", "अश्वरथः, क्षत्रस्य रूपम्", "यत्सुरा भवति क्षत्ररूपं तत्"। अयं प्रयोगः आधुनिकप्रतीकशब्दप्रयोगेण तुलनीयः, यत् प्रत्यक्षीक्रियते तद् रूढिवशात् समयानुबन्धेन वा कस्यचित् परोक्षस्य ज्ञापकम् इत्येव प्रतीकशब्दार्थः। यथा-मसीचिह्नानि वर्णान् ज्ञापयन्ति समयबलात् परिणयावसरे वा रक्तपरिधानं सौभाग्यं द्योतयति तथैव सामाजिकाभ्युपगमवशात् प्रतीकः। प्रतीकः, तद्बोद्धयोऽर्थः, पुनश्च सङ्केतज्ञानेन तद् बोधनसमर्थाः पुरुषाश्चेति त्रयोंऽशाः प्रतीकप्रतीक्यभावस्य सम्बन्धित्रयावगाहिनः। एवं च रूढसङ्केतचिह्नम् एव प्रतीक इति पर्यवस्यति। प्राचीनोऽपि अयमभिप्रायः प्रतीकशब्दवाच्यो नानासन्दर्भप्रयुक्ततया नूतन एव।

आभासमानेषु सृष्टार्थेषु प्रत्येकं स्वकीयं परिच्छिन्नं रूपं प्रदर्शयन् तद्द्वारैव अपरिच्छिन्नां परोक्षां च स्रष्टुरद्भुतां मायाशक्तिं प्रदर्शयति। यत् प्रत्येकं व्यवस्थितं रूपं सृष्टार्थानां सैव तैषां शोभा सौष्ठवं वा। यथा–

**"नभो न रूपं जरिमा मिनाति"।**

अत्र जरसा विधीयमानाया रूपहानेरुल्लेखः। स्वाभाविकं रूपमेव सौन्दर्यं द्योतयतीति वक्तुं शक्यते।

सौन्दर्यवाचका बहवः शब्दा वेदेषु प्रयुक्ताः निघण्टौ केचित् संगृहीताश्च। तथा रूपसुखप्रशस्यप्रज्ञासत्यनामानि पृथक्पृथगुल्लिखितानि। षोडश

रूपनामानि । तत्र निर्णिक् शुद्धिमाचष्टे, वव्रिराच्छादनम् । वपुः अमतिश्च कान्तिमाचक्षाते यथा "तदिन्मे छन्सद् वपुषो वपुष्टरं पुत्रो यज्जानं पित्रोरधीयति," "वि सूर्यो अमतिं न श्रियं सात्" । अप्सः, प्सुश्च कदाचिद् आभां ब्रूतः यथा "अरुणप्सु विश्वप्सु" इत्यादिभिः सूच्यते । प्सरः प्रीणयितृतममिति सायणीयं व्याख्यानम्, तथा "जुषस्व सप्रथस्तमं वचो देवप्सरस्तमम्" । पिष्टं पेशश्च विविक्ततया विज्ञायमानं रूपमाहतुरिति वक्तुं शक्यते । तथा- "केतुं कृण्वन्नकेतवे पेशोमर्या अपेशसे । समुषद्भिरजायथाः" । सायणो व्याचष्टे–केतुः प्रज्ञानं पेशोरूपमिति । शुचिपेशा धीः, ऋतपेशा इत्यपि श्रूयते । अवधेयं चात्र शिल्पशब्दोऽपि रूपनामसु पठितः । शतपथे दृश्यते– "यद्वै प्रतिरूपं तच्छिल्पम्", ऐतरेये देवशिल्पोल्लेखो लभ्यते । तत्र शिल्प- लक्षणमपि व्यधायि– "आत्मकृतिर्वै शिल्पमिति" । शांखायने दृश्यते– "त्रिवृद् वै शिल्पं नृत्यं गीतं वादित्रमिति" । केचिच्छिल्पं पिंशतेरेव व्युत्पादयन्ति ।

सुखनामसु सुरम्यं, सुम्नं, शिवं, शमिति च लभ्यन्ते । प्रशस्यनामसु अनवद्यः, वामः, वयुनं चेति, प्रज्ञानामसु केतः, धीः, माया, वयुनमभिख्या चेति । श्रीभद्रचारुप्रियचित्रशुभ्रदर्शतरण्व-स्वाद्वद्भुतादयोऽपि शब्दाः सौन्दर्यप्रतीतिसम्बद्धा एव । उषाः सूनरीत्युक्ता, सूनरं वस्विति दृश्यते । अग्निः सुरूपकृत्नुरुक्तः । एवं रूपशब्दः तज्जातीयाश्च शब्दाः प्रज्ञापकलक्षणे शुचिशोभायां रम्ये चालङ्करणे प्रयुक्ता दृश्यन्ते ।

**विलक्षणैवोक्ता केश्चित् सौन्दर्यस्य पुमर्थता ।**
**वेदेषु कमनीयत्वमात्मन्येव रतिर्भवेत् ॥ १२ ॥**
**आनन्दो भासमानस्तु सत्त्वोपाधिषु साकृतिः ।**
**आत्मविश्रान्त्यभेदेन सौन्दर्यं व्यपदिश्यते ॥ १३ ॥**

कतिपयैर्विद्वद्भिः वैदिकसौन्दर्यबुद्धेर्विवरणं निबद्धम्, तद् यथा पिशेल-ओल्डेनवर्गाभ्यां शर्मण्याचार्याभ्याम्, भारतीयैश्च पी.एस. शास्त्रिमैणकरादिभिः[8] । ओल्डेनवर्गः स्वमतमित्थं प्रकाशयामास– वैदिकर्षयः सौन्दर्यस्य वैलक्षण्यं नाबुध्यन्त प्रत्युत लौकिक-पारलौकिकार्थेभ्यस्तद-

विवेकमेव प्रत्यपद्यन्तेति। सौदन्दर्यस्य सतः श्रेयसश्चैकान्तिकभेदो वैदिकदर्शने न स्वीक्रियत इत्यवितथमपि न दोषाय, न हि तेन तत्सौन्दर्यबुद्धेः काचिद् हानिरापाद्यते। पुरुष एव परमार्थः सच्चिदानन्दरूपः सर्वेषामर्थानामेकायनम्, "रसो वै सः, रसं ह्येवायं लब्ध्वानन्दीभवति", "तस्यैव कामाय सर्वं प्रियं भवतीति" प्रतिपत्तेः सत्यज्ञानेनैव अनित्यप्रेयोतिशायिश्रेयो लभ्यते अभोगासंवेदनात्मकश्च परमानन्दः। 'आनन्दरूपममृतं यद् विभाती'त्यत्र अस्ति भाति प्रियं चेति त्रयोऽपि पक्षा अभेदेनैव प्रतिपादिताः। सच्चिदभिन्नोऽपि नित्यानन्दः आत्मप्रकाशविश्रान्तिरूपः परमो रसः। यद्यपि नायं विषयानन्दतुल्यो विषयत्वस्य संवेदनस्य चाभावात्, तथापि सद्वद् ज्ञानवद् वा समानशब्दज्ञाप्यलौकिकार्थेन तुल्यतामतुल्यतां च धत्ते। सत्यज्ञानानन्द- शब्दाः परिच्छिन्नलौकिकार्थवाचका अपि जहदजहल्लक्षणया परिच्छेदातीतमद्वयं भूमानं लक्षयन्ति कला इव कलाधरम्। तस्यैवानन्दस्य मात्राः सर्वत्र सृष्टौ लक्ष्याः सहजशुद्धया प्रतिभया विगलितरजस्तमोवरणया। तथा च ऋषिभिर्विश्वं व्यलोकि वर्णितं च दिव्यज्योतिःप्रभास्वरं ऋतानुगृहीतममृतच्छायमद्भुतं मधुमयम्। दिव्यालोक एवाशेषाणि रूपाणि व्यनक्ति शिल्पितमः कवितमः। विश्वमति-क्रान्तोऽनुप्रविष्टश्च देवः, देवत्वाभिन्ना च रूपसुषमा रूपकान्तिश्च विश्वस्य। तत्प्रतीतिरेव सौन्दर्यप्रतीतिः।

इदमवधेयं यत्पाश्चात्त्येषु सौन्दर्यविचारे सुन्दरस्य उदात्ताद्भेदः प्रतिपादितः।

**सुन्दरोदात्तयोर्भेदो व्याप्त्यतिक्रान्तिमूलकः।**
**पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि॥ १४॥**

रूपसम्मितमिव सौन्दर्यं यथा पुष्पधानीनिहितस्य पुष्पस्य, रूपातिक्रामिणीवोदात्तता यथा दिवोऽपारस्य वा जलनिधेः। वैदिकदर्शने तु उभयविधमपि सौन्दर्यं मिथोऽविरुद्धमेव। तथा च यस्य भगवतो वासुदेवस्य विराड् रूपं संहारभयानकं तस्यैव भक्तवत्सलं मानुषं रूपमिति प्रत्यक्षमेवार्जुनस्य। प्रत्यक्षीकृता च तस्यैव नरसिंहाकारता भक्तराजेन

प्रह्लादेन । परिच्छेदात्मिकायाः सृष्टेरिदं रहस्यं यद् विभिन्नानां विरुद्धद्वन्द्वानां सहैव प्रकाशनम् । विरोधाश्च सर्वे परिच्छिन्नस्वरूपप्रभवाः समानाधिकरण-समाहृतास्तिष्ठन्ति समाहारद्वन्द्वसमासमिवोपदर्शयन्तः । स्रष्टैव च विरोधान् संहरत्यपि मायिकपरिच्छेदविलापनेन । यथा भावाभावयोर्विरोधो नित्ये वस्तुनि शाम्यति, यथा च ज्ञानाज्ञानयोः साक्षिचैतन्ये, एवमेव रूपव्याप्त्यतिक्रान्त्योः सुमित्यमित्योः विरोधोऽपि मितिहेतौ रूपसारे व्यञ्जकात्मनि ज्योतिषि । न चैवं कुरूप-सुरूपयोः सुमितकुमितयोर्भेदोऽपि विलीयेतेति वाच्यम्, तादृशभेदस्य द्रष्टृचित्तापेक्षतया वस्तुनिष्ठत्वाभावात् । एवं सौन्दर्योदात्तयोर्भेदो रूपसृष्टिविलययोरेव निगूढं रहस्यं प्रकाशयति ।

ननु यदत्र वैदिकदर्शनत्वेन उपन्यस्तं तद् औपनिषदं कदाचित् स्यान्न तु तत्प्राचीनतराणामृषीणामभिप्रेतमिति प्रमाणयितुं शक्यं संहितामन्त्रेषु तादृशतत्त्वाप्रतिपत्तेः । तथा च आधुनिका विद्वांसः पूर्वोत्तरकालिकवैदिकर्षीणां ज्ञानभेदमेव प्रतिपादयन्ति । प्राचीना ऋषयो बाह्यान् प्राकृतानर्थान् यथादृष्टं सोत्प्रेक्षं वा वर्णयन्ति स्वाज्ञानवशादेव च जड़पदार्थेषु तत्र देवत्वं कल्पयन्तीति तेषामभिमतम् । एवं सति ओल्डनवर्गादिप्रतिपादनमेव वैदिकसौन्दर्यबुद्धिविषयं साधु प्रतिभातीति चेत् ।

न, आगमे श्रद्दधानैः पूर्वोत्तरयुगार्षवचनेषु शैलीभेद एव प्रतिपद्यते न तत्त्वज्ञानभेदः ।

**अद्वैतं दर्शनं श्रौतं कालभेदाविभेदितम् ।**
**आभासो देवदेवस्य विश्वसौन्दर्यमिष्यते ॥ १५ ॥**
**रूपे रूपे हि सङ्केतो लक्ष्यते परमेशितुः ।**
**व्यञ्जकत्त्वं तु तस्यैव रूपश्रीरभिधीयताम् ॥ १६ ॥**

एकं सद् विप्रा बहुधा वदन्तीत्यत्र स्फुटमेवाद्वैततत्त्वमभिव्यक्तं लक्ष्यते । यास्केनाप्यभ्यधायि एक एवात्मा देवानां बहुधा स्तूयत इति । प्राकृता अर्थाः सूर्याग्निवातादयो देवाधिष्ठितत्वात् चैतन्यव्याप्ततयार्षप्रज्ञया समलक्ष्यन्त । तत्र बाह्यमैन्द्रियं रूपं दिव्यानुभावश्च अन्योन्यतादात्म्यप्राप्ताविव वर्णितौ ।

मनुष्येष्वपि तथैव किं न दृश्यते देहात्मनोरन्योन्याध्यासात् । न चाग्न्यादयो निष्प्राणा अचेतना इति दृष्टान्तवैरूप्यमिति वक्तव्यम्, अग्न्यादीनां देवतात्मकत्वाद् देवेषु च चेतनाचेतनविभागस्याप्रयोजकत्वाद् उपासना-मात्रापेक्षत्वाद् देवत्वस्य ।

एवं वैदिकमन्त्रेषु देवत्वप्रतीतिः सौन्दर्यप्रतीतिश्च न सर्वथा पृथक् कृत्वा विभाव्ये । शुचिता, पवित्रता, कान्तिमत्ता, तेजस्विता, वीरता, गौरवम्, महिमा, अद्भुतता, भयप्रीतिविस्मयजनकता अन्ये च सदृशा गुणाः लोकविलक्षणमात्रया तत्र विभाव्यमाना दिव्यत्वसौन्दर्ययोः भेदप्रतीतिं दुर्लक्ष्यां विदधति । ज्योतिर्मयत्वमद्भुतत्वं सङ्केतोपमत्वं चेति त्रिभिर्मुख्यैः लक्षणैः आर्षदर्शनानुरूपं रूपस्वरूपं शक्यते लक्षयितुम् । तत्रापि साङ्केतिकत्वमेव मूलभूतम् । कलामर्मज्ञैः कुमारस्वामिमहाभागैराद्ययुगस्य आम्नायानुसारिणः काव्यकलादीनां साङ्केतिकत्वमेव मुख्यं लक्षणं प्रत्यपादि । तथैव च श्रीमदरविन्दमहर्षिभिरपि आर्षकाव्यस्य लक्षणमिदमेवाधिमानसिक-प्रतिभया निष्पाद्यं साङ्केतिकत्वमुक्तम्[9] । आम्नायविषयस्य परमार्थस्य स्वरूपतो नामरूपाभावात् आर्षवाचा तदभिव्यक्तिः सङ्केतद्वारैव क्रियते । सर्वभूतप्रत्यक्षो दाहकप्रकाशकादिरग्निः तेजोमयीं ज्ञानमूर्तिं देवस्य प्रत्यक्षयति मन्त्रमय्या धिया उपास्यमानः । सङ्केतविशिष्टशब्दप्रतिपाद्योऽर्थः अधिमानस-भूमिगतचैतन्याभिन्नो भाव्यमानः स्फुटीभवति देवविभूतिमयः । नामरूपकर्म-भिरेव देवस्य सङ्केतः क्रियते । सङ्केतशब्दाश्च छन्दोमहिम्नार्षज्ञानेन देवानुभावेन च आधिमानसिकीं धियं व्यञ्जयन्ति । रूपं देवत्वसङ्केत एंव वैदिकदर्शने इति निर्गलितार्थः । दिव्यकविसृष्टं रूपं वस्तुभूतं जगदात्मकम्, मर्त्यकविसृष्टं तद् वाङ्मयं काव्यं शिल्पं वा । साङ्केतिकत्वमित्थम् ईश्वरकृतसहजसङ्केतेन सर्वपदार्थेषु, मानवीयसङ्केतेन काव्यकलादिषु व्याप्रियते । अस्यामेवागमपरम्परायां परवर्तीन्यपि आध्यात्मिकार्थव्यञ्जकानि भागवत-दिव्यप्रबन्ध-रामचरितमानसादीनि नानायुगसम्भवानि काव्यानि । वैदिकयुगान्त एव इतिहासकाव्यकालः ।

**इतिहासेषु वीराणां चरित्रेषु निदर्श्यते ।**
**धर्माधर्मगतिः सूक्ष्मा रूपभेदश्च लक्षणम् ॥ १७ ॥**

वैदिककाव्यं देवाख्यानपरं लोकोत्तरार्थस्य साङ्केतिकं व्यञ्जकम्, इतिहास-काव्यं वीरोपाख्यानपरं जातीयचारित्र्यं धर्माधर्मदृष्टान्तव्यक्तं निरूपयति । देवाः सर्वथा मनुष्योत्तरा नित्यमेव स्वेन ज्योतिषा भान्ति हृदयगुहायाम् । अज्ञानवृत्रनिगूहितमिव तज्ज्योतिः मन्त्रबलसहितेन ज्ञानवज्रेण प्रवाह्यते । मर्त्यत्वाददेवा अपि वीरा मानवाधिकाः लोकोत्तरचेतसः अद्भुतकर्माणः स्वचरितेन धर्मगतिं निदर्शयन्तः जातीयचारित्र्यकल्पनाम् अनुसरन्ति । देवाख्यानेषु देवासुरसंग्रामः सदसतोः ज्योतिस्तमसोः बृहत्संघर्षमेव नित्यं निदर्शयति । वीरचरितेषु पुनर्धर्माधर्मयोर्युद्धं स्वरूपेण सनातनमपि युगानुरूपप्रवृत्त्या प्रत्यक्षीभवति । रामायणमहाभारते कविवरेण रवीन्द्रनाथेन सनातनेतिहासंज्ञया व्यपदिष्टे । "इतिहासः पुरावृत्तम्" "ऐतिह्यं पारम्पर्य"-मित्युक्तम् । अभिनवगुप्ताचार्याः पुनः यत्र 'आगमिकार्थाः कर्मफलसम्बन्ध-स्वभावाः प्रत्यक्षपरिदृश्यमाना इव लक्ष्यन्ते' तमितिहासमाहुः[10] । पुरावृत्ततयोपवर्णितं पारम्पर्यागमितं मानवचरितनिदर्शनमेव सनातनतत्त्व-प्रकाशकं प्रत्यक्षायमाणवस्तुकम् इतिहास-काव्यमिति वक्तुं युज्यते । नायमितिहास आधुनिकदृष्ट्यावधारित इतिहासो यत्र लौकिकप्रत्यक्षानुमान-समर्थितमेव सामान्यलोकस्वभावप्रमाणेन सम्भाव्यं जनचरितमेव शङ्कावधिप्रयुक्ततर्केण व्यवसितयाथार्थ्य निबध्यते । तथा च जनश्रुतिमात्रपरीक्षितं प्राचीनानां पुरावृत्तं प्रत्ययानर्हमितिहासनाम्ना नाख्येयमिति नवं मतम् । जानपदिकभावग्रहणात् पूर्वमेव यायावरजनानां परस्परयुद्धेषु तन्नेतॄणां चरितानि निरङ्कुशयैव कल्पनया निबद्धानि नेतिहासज्ञानसाधनानि मन्तव्यानि । तथापि यथा देवाख्यानकल्पनासु जातीयनियतिप्रतिबिम्बः कैश्चिद् विपश्चिद्भिर्लक्ष्यते[11] तथैव वीराख्यानेषु बहुतरैः धर्मविषया जातीयकल्पना तद्युगानुकूला लक्ष्यते । यद्यपि इतिहासकाव्योपवर्णितवृत्तान्ता याथार्थ्यं भजन्ति न वेति सन्दिग्धमेव, तथाप्यसन्दिग्धमेव तद्वर्णितवीरचरित्राणां जातीयसंस्कारनियामकत्वम् । तथा रामादीनां शीलगुणचरितानि श्रेयोऽभीप्सुभिः उपास्यानि न तु खलानां

रावणादीनामिति दृढाङ्कितं भारतीयमानसे । रामादयः पुरुषाणां रूपभेदादादर्शमिवोपस्थापयन्ति । एवम् इतिहासकाव्योपवर्णितचारित्र्यरूपाणि शीलादर्शप्रज्ञापकलक्षणानीति वक्तुं शक्यम् । तथा च रूपतत्त्वं मानवविषयं तत्त्वप्रत्यक्षलक्षणमेवेत्यवसेयम् । युधिष्ठिरार्जुनादयो दुर्योधनशकुन्यादयो रामवासुदेवादयश्च न द्वन्द्वोपहतास्थिरस्वभावानां सामान्यपुरुषाणां निदर्शनभूताः प्रत्युत तत्तदुदग्रचित्तवृत्तीनामेव विलक्षणानां पुरुषरत्नानामेव । तच्चरितानि वृत्तिविशेषप्राधान्यानुरोधेन कर्मफलस्वभावं धर्ममेव प्रत्यक्षयन्ति ।

उत्तरकाले यदा श्रमणधर्मप्रचारः समजनि पुरुषस्वभावः पुरुषार्थश्च भिन्नतयावधारितौ । "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यादि सोल्लासा दृष्टिरमन्दायत, दुःखात्मकमनात्मकमनीश्वरं च जगद् अविद्याकामकर्मनियतं चेति प्रतिपन्नमुत्तरोत्तरं लोकेन । रूपं मारपाश एव ततो व्यवसितः, देवानां युद्धवीराणां चाख्यानानि कालात्यस्तान्यभूवन्, धर्मवीराणां वैराग्यस्य तपसश्च कथा उपादीयन्त कविभी रूपकारैश्च । वैदिकदृष्ट्या रूपमेकतः ज्योतिषाभिन्नं सतः प्रकाशकम्, अपरतश्च मायिकं सद् आवरकम् । एवं रूपं वैदिकदृष्ट्या सत्प्रभाऽपि मायिकप्रतिभासोऽपि । श्रमणदृष्टिस्तु सृष्टिवादं वा अद्वैतवादं वा नाभ्युपजगाम ।

**बौद्धैः सप्रतिघं रूपमैन्द्रियाभासलक्षणम् ।**
**विज्ञानाकृतिमात्रं वा प्रतिबिम्बोऽथवा मतः ॥ १८ ॥**

बौद्धा रूपं भौतिकं ध्यानमयञ्च अङ्गीकृतवन्तः । बाह्येन्द्रियगोचरभूमौ रूपं प्रतारकमेव कामलोकगतम् । ध्यानेन च विशुद्धरूपलोको गम्यः । ध्यानं प्रज्ज्वलितं चित्तज्योतिरेव तेन रूपलोकोऽरूपलोकः परमार्थश्च प्रकाश्यते । एवं ध्यानम् अनैन्द्रियप्रत्यक्षस्यहेतुः । ऐन्द्रियप्रत्यक्षातीता मनोविज्ञेया अर्था धर्मायतनम् इति प्रसिद्धम् । तथा च प्राचीने बौद्धविचारे नामरूपयोः धर्मरूपयोश्च चर्चा लक्ष्यते । प्रायेण नामरूपयोः अर्थः चित्तचैत्तं भूतभौतिकं चेति गृह्यते । नामशब्दश्च चित्तवाची दृश्यते । रूपं च तदतिरिक्तं विषयजातम् । एवं वैदिकाद् नामरूपशब्दप्रयोगात् प्राचीनबौद्धप्रयोगो भिद्यते । धर्मरूपयोः समाहारेऽपि धर्मः रूपप्रतियोगी

लक्ष्यते । कतिपयैर्विद्वद्भिः बौद्धानां धर्मरूपयोः भेदे धर्मस्य वैदिकब्रह्मणा तुलना कृता । ब्रह्म जगद्हेतुतया अवधार्यते । हेतुताऽपि इच्छापुरस्सर-चेतनव्यापारतया अवधारिता । धर्मोऽपि विश्वस्य नियामकः, न त्वत्र हेतुता चेतनव्यापारतुल्या । धर्मनियमः सर्वविषयाणां स्वभावपारतन्त्र्यमेव, जन्यजनकभावः स्वभावादेव प्रवर्तते, प्रतीत्यसमुत्पादाख्यो न चात्र कश्चित् कर्ता अपेक्ष्यते । एवं जायमानं नश्यच्च जगत् प्रतिक्षणं कर्तृनिरपेक्षं स्वभावमात्रपरतन्त्रम् । न त्वयं यदृच्छावादो जडस्वभाववादो वा । चेतनपुरुषाणां हि कर्माण्येव लोकान् रचयन्ति, भोगांश्च नानाविधान् प्रत्युपस्थापयन्ति । पुरुषा अपि न शाश्वता द्रव्यसन्तो वा, नानाचित्तधारा एव हि तत्तद्देहपरिग्रहेण कर्मफलनियमेन संसरन्ति ।

एवं प्राचीनबौद्धसन्दर्भे अनीश्वरवादानात्मवादपुरस्सरं चित्तं रूपञ्चेति पदार्थद्वयविवेको मुख्यतया कल्पितः । उभयोर्नियामको धर्मोऽन्ततः कर्मफलसम्बन्धस्वभावः चित्तस्वभावनिबन्धन एव वक्तुमुचितः ।

**रागत्यागविषयत्वात् कारणं बन्धमोक्षयोः ।**
**रूपं द्विविधसौन्दर्यं भोग्यत्वाच्छान्तितस्तथा ॥ १९ ॥**

रूपं चित्तस्य प्रतिष्ठा कामभोगयोरालम्बनम् इन्द्रियाणां बन्धनं च । अतो रूपं प्रति वितृष्णैव प्राकाश्यत बौद्धाचार्यैः । बौद्धकाव्ये संसारस्य दुःखात्मकत्वं वैराग्यस्य शान्तिजनकत्वं शान्तेश्च उत्तमत्वं बहुत्र व्यक्तम् । मृत्योः संवेगः चमत्कारितया वर्णितः । यथा–

**"को नु हासो किमानन्दो निच्चं पज्जलिते सति ।**
**अन्धकारेण ओनद्धा पदीपं न गवेस्सथ" ॥**

इदमवधेयं यन् मृत्युजन्यसंवेगं विषयीकृत्य बहुत्र वैराग्यपरककाव्यस्य प्रवृत्तिः अन्यत्रापि दृश्यते । यथा महाभारते प्रसिद्धे गृध्रगोमायुकृतसंवादे । अस्ति च स्थविरवीतशोकस्य प्रसिद्धा गाथा–

**"केसे मे ओलिखिस्सन्ति कप्पको उपसंकमि" ।**
**ततो आदासमादाय सरीरं पच्चवेक्खिस्सं ।**
**तुच्छो कायो अदिस्सित्थ अन्धकारो तमोव्यगा ॥**

स्वकेशच्छेदार्थं नापितमुपसंक्रान्तः स्थविरः आदर्शे आत्मानं प्रत्यवेक्षमाणः सहसा वैराग्यम् उपगतः । अस्ति अन्योऽपि सुप्रसिद्ध आदर्शपर्यायो यत्र आनन्दो ज्ञानमवाप्तवान् । उपनिषत्सु आत्मा नामरूपविषयी अपि तदनुप्रविष्टोऽपि तत्प्रतियोगितयैव ज्ञातव्य इति प्रतिपादितमेव । नामरूपविज्ञानं परागवृत्त्यैव शक्यम् । आत्मविज्ञानं बहिर्विषयनिषेधपुरस्सरां प्रत्यगवृत्तिमपेक्षते । एवं रूपं बाह्योऽनात्मविषयःततः परावर्तनेनैव आत्मज्ञानं सम्भवति । आदर्शे स्वमुखदर्शनं ततः परावृत्तरश्मिभिरेव जायत इति प्रत्यक्षमेव निदर्शनम् उपलभ्यते तत्र आत्मज्ञानस्य । यदेव रूपं बहिर्मुखचेतसो बन्धनं तदेव निषिध्यमानं स्वरूपबोधे हेतुः । वेदान्तेषु सांख्ये च एषा अतद्व्यावृत्तिः बाह्यान् आभ्यन्तरान् विषयान् व्याप्नोति । तथा च रूपेण सार्धं चित्तमपि निषेध्यकोटौ निवेश्यते । बौद्धेषु आत्मप्रतीतिरपि चित्तस्य अहंकृतेः न विवेच्यते । चित्तं च रूपञ्चेति द्वयमपि अनात्मभूतम् अभ्युपगम्यते, तत्र स्थिरतत्त्वस्य अभावात्, आत्मनश्च चित्तव्यतिरेकेण अनुपलम्भाच्च । तथापि प्रत्यवेक्षया देहात्मकरूपस्य चित्तस्य च दुःखनित्यविषयत्वाद् अनात्मत्वं प्रत्येतव्यं भवति । वैदिकदृष्ट्या विषयेभ्यः परावृत्त्यं आत्मबोध इष्यते । वैरोचनः जले स्वदेहप्रतिबिम्बं दृष्ट्वा तमेवात्मानं जग्राह । इन्द्रस्तु तन्निषिध्य देहातिरिक्तमात्मानं अन्विष्टवान् । बौद्धा आदर्शगतप्रतिबिम्ब-निषेधेन आत्मानमेव निराचक्रुः । आत्मप्रतीतिः प्रतिबिम्बवत् प्रातिभासिकी इति ते प्रतिपन्नाः ।

एषा प्राचीना वैभाषिकदृष्टिर्या चित्तरूपे अनित्ये वस्तुभूते मन्यमाना आत्मानमेव अवास्तविकं व्यज्ञापयत् । रूपं वस्तुसदपि सदोषम् अनित्यतया त्याज्यम् । आत्मा तु अवस्तुतया त्याज्यः । ननु एवम् अवबुद्धस्य रूपस्य सौन्दर्यबुद्ध्या कः सम्बन्धः, सौन्दर्यबुद्धिविषयस्य रूपस्य वस्त्ववस्तुविवेको-पेक्षित्वात् प्रतिभासमात्रनिष्ठत्वाच्च । एवं च बौद्धागमप्रयुक्तरूपशब्दस्य सर्वथैव प्रकृते प्रसङ्गे अप्रयोजकत्वाद् इति चेत् ।

न, सौन्दर्यबुद्धिविषयविवेचनं बुद्धिमात्रविषयविवेचनम् अपेक्षते । प्राचीनबौद्धैः रूपं वस्तुभूतं हेयं च स्वीकृतमिति सौन्दर्यबुद्धिरपि कामसुखादिबुद्धिवद् हेयपक्षे व्यवस्थापिता । तथा च भिक्षून् प्रति भगवतोऽववादो नृत्यगीतचित्रादिदर्शननिषेधपरः । तथापि स्मर्तव्यं प्राचीनबौद्धागमे सौन्दर्यबुद्धिर्न सर्वथा तिरस्क्रियत इति[12] ।

**शमप्रधानं बौद्धानां काव्यं प्रासादिकं तथा ।**
**रम्यत्वं प्रकृतेस्तत्र चित्तस्येव प्रभास्वरम् ॥ २० ॥**

तथा च ज्योत्स्ना, वनानि वृक्षाः सरित इत्यादयो विषयाः प्रासादिका रमणीयाश्च उक्ताः, तत्र चित्तप्रसादस्य अकामप्रीतेः शान्तेश्च प्रत्यक्षलभ्य-त्वात् । ध्यानजन्यनिष्कामप्रीतिसुखतुल्यं तु तत्सुखं न ततो भेतव्यमित्यपि भगवतो वचनं स्मर्यते । एवं निसर्गरमणीयानि दृश्यानि बौद्धकाव्ये शान्तं विभावयन्ति । शान्तपरञ्च काव्यं तैः उपादेयमतम् । यथा–

**"यदा बलाका सुचिपण्डरच्छदा कालस्स मेघस्स भयेन तज्जिता ।**
**पलेहिति आलयमालयेसिनी तदा नदी अजकरणीरमेति मं ॥"**

रम्धातोर्मूलभूतार्थस्य विश्रामपरत्वाद् स्वात्मविश्रान्तिरेव रतिशब्दार्थो वक्तव्यः । रमणीयताऽपि चित्तविश्रामहेतोस्तथोच्यते । विश्रान्तिश्चैषा न संमोहजन्या अपि तु मनोनैर्मल्यहेतुरिति सा प्रासादिकेत्यभिधीयते ।

एवं वैभाषिकमतेन रूपं वस्तुसत् स्वभावनिष्ठं च हेतुप्रत्ययनिर्मितं चित्तव्यतिरिक्तम्, तदालम्बनप्रत्ययश्च न प्रातिभासिको नापि साक्षाच्चित्तापेक्षः । तत्र कामविषयतया प्रियत्वप्रतीतिः अज्ञाननिबन्धनैव अशुभभावनया विभज्यवादपरेण विचारेण च निवार्या । निष्कामतासङ्गता शान्तोद्दीपनभूता तु तत्र प्रासादिकरमणीयता ध्यानविपश्यनादिसहयोगितया उपादेया एव । तथा च सौन्दर्यबुद्धिविषयतया रूपं कामासक्तिविषयो वा स्याद् निष्कामध्यानविषयो वा । अतश्च काव्ये प्रज्ञया विचार्यमाणं वा रूपं तत्समुचितविषयः स्याद् ध्यानप्रवणभावनया वा भाव्यमानम् इति निर्गलितार्थः ।

**विचाराद् ध्यानतश्चैव सौन्दर्यं भात्यलौकिकम् ।**
**रूपं काल्पनिकं शान्तंप्रतिबिम्बत्वबोधतः ॥ २१ ॥**

अर्थक्रियात्मकसत्त्वं रूपं कथं स्वजन्यविज्ञानेन साक्षाद् ग्राह्यं स्यादिति बाह्यार्थस्वभावस्यापरोक्षलक्षणाद्भेदः प्रतिपत्तव्य इति सौत्रान्तिका न्यायतः प्रत्यपीपदन् । पुरतः प्रतिभासमानरूपं विज्ञानस्य साक्षान्निमित्तं निर्विकल्पकक्षणहेतुकं सदपि स्वयं विज्ञानाकार एव भवितुमर्हति । अभ्युपगतेऽपि बाह्यार्थस्वभावे स्वलक्षणात्मके तस्य शब्दायोग्यत्वात् तस्य लक्ष्यमाणं रूपं सामान्यलक्षणं विज्ञानावधृतमेव, विकल्पितत्वात् तु व्यवहाराविसंवादित्वेऽपि न तथा वस्तुसत् । एवं च सविकल्पकप्रत्यक्षविषयो रूपम् अनादिवासनापेक्षं काल्पनिकं प्रतीतिसारं चेति सिद्ध्यति । वर्णनीयं रचनीयं वा रूपं सामान्यविशेषात्मकत्वात् कल्पनाविषय एव, न त्रैलोक्यव्यावृत्तं स्वलक्षणं प्रतिभासविषयः ।

न च निरूपणीयविषयत्वव्यापकं काल्पनिकत्वमप्रयोजकं सौन्दर्यनिर्णयेऽतिव्याप्तत्वादिति वक्तव्यं कल्पनाविशेषस्य प्रयोजकत्वात् । सांवृतज्ञानोपकारिणी कल्पना सर्वसाधारणान् सहजविकल्पान् प्रतिभासगृहीतार्थेन नियमतो योजयति, क्रियोपकारिणी कल्पना तु सांवृतज्ञानसंप्रयुक्ताऽपि कर्मानुकूलोपाया प्रवर्तते । कर्तृतन्त्रत्वाच्च क्रियायाः कर्तृस्वभाववासनाज्ञानप्रयोजनसामर्थ्यादिनिबन्धनत्वाद् अनियतत्वमनिवार्यम् । एवं काव्यशिल्पादिषु यथेष्टं यथाविज्ञानं च रचनावत्वमेव रूपस्य सौष्ठवावच्छेदकम् । कवयः शिल्पिनश्च बाह्यमर्थं यथालोकदृष्टमेव प्रत्यक्षीकुर्वन्तः स्वमनीषया अपूर्वार्थेन संयोज्य प्रस्तुवते स्वबुद्धिं वापूर्वां नामरूपसंयोजनेन बाह्यार्थवत् प्रकाशयन्ति । एवं च रूपे संरचनात्मकत्वमुभयथा लक्ष्यते ज्ञेये ज्ञानाव्यभिचारिविकल्पयोजनया, कार्ये साध्यसाधनप्रकारयोजनया च । पुरतः स्थितो वृक्षः शुष्क इति ज्ञानं स्वविषयभूतं रूपं तटस्थवर्णनीयतयोपस्थापयति, तत्र रसशोषं खेदावहं भावयन् तमेव विषयं काव्ये शिल्पे वा रूपान्तरेण रचयति । दृश्याकारो निरूपणप्रकारश्च रूपमिति ततोऽवसेयम् ।

विज्ञानवादिभिः बाह्यार्थनिषेधेन विषयाणां विज्ञानाकारमात्रत्वप्रतिपादनाद् विज्ञानाकाराणां चान्ततो वासनामूलत्वाभ्युपगमाच्च रूपमात्रस्य

स्वप्नसन्निभत्वमापादितम्[13] । वासनैव मायोपमं विश्वं सृजति, विषयाकार-निर्माणशक्तिरूपा कल्पना चित्तस्वरूपभूतैव । व्यवहारश्चित्तान्तर्भूतोऽपि वस्तुगतबाह्यार्थप्रतीतिरूपयाऽविद्यया परिगतः कर्मायासदुःखादिसंभिन्नः । तत्र रूपं बाह्यं चित्तप्रतियोगितया जडं च भाति । विज्ञानमयत्वावबोधे तु विषयाणां तत्संवेदनमपि स्वपरामर्शे पर्यवस्यति परावृत्तिश्च ततश्चेतसः संपद्यते । तुल्यमेतद् लक्ष्यते काव्यशिल्पादिभावनायाम् । सौन्दर्यबुद्धिविषये रूपे तत्कालस्थगितबाह्यवस्तुत्वप्रतीतेः शिथिलिततन्निबन्धनव्यवहारबुद्धेश्च काव्यशिल्पादिषु प्रतिपद्यत इव विज्ञानवादः । व्यावहारिकलोकप्रतिबिम्ब-सन्निभः काव्यशिल्पादिसौन्दर्यबुद्धिसंसारः । स च कार्य-कारणभाव-परतन्त्रो बाह्यवस्तुकलापोऽपि चित्तान्तःस्थभावप्रतिबिम्ब एव ।

शून्यवादिनो रूपं तद्ग्राहकं चित्तं च उभयमपि निःस्वभावं प्रतिबिम्बमात्रं प्रतिपादयन्ति । स्वभावालम्बनो दुःखैकसत्यः संसारः, निःस्वभावालम्बना महाकरुणा । प्रतिबिम्बमात्रं च रूपं संसारायापि भवति निर्वाणायापि, संसारनिर्वाणयोश्च न कश्चिद्भेदः परमार्थतः । अत्रैव रूपविषयं बौद्धचिन्तनं परां काष्ठामृच्छति रूपं प्रतिबिम्ब एवेति ।

**नैर्माणिकेन रूपेण बुद्धकायः पुरास्फुरत् ।**
**प्रतिमानुस्मृत्या तस्य प्रतिबिम्बानुकारिणी ॥ २२ ॥**

बुद्धकायमुद्दिश्य प्रारम्भिके युगे तद्रूपकायः स्थूलशरीरादभिन्नः पूतिकाय इति संज्ञितः, धर्मकायश्च शिक्षासमूहात्मकोऽवधारितः । कालान्तरे अनास्रवरूपस्य कल्पना कृता यत्प्रभास्वरं चित्तवदेव, अप्रमाणं च । निर्माणकाय इत्यपि तस्य संज्ञा श्रूयते, स च पातञ्जलदर्शनोक्तेन निर्माणचित्तेन तुल्यः । महायाने धर्मसम्भोगनिर्माणाख्यास्त्रयः काया लक्ष्यन्ते । धर्मकायः परमार्थ एवाद्वयोऽनिर्वाच्यः, सम्भोगकायो ज्योतिर्मयो बोधिसत्त्वोपदेशार्थपरिगृहीतः, निर्माणकायो मनुष्यभूमौ प्रतिभासितो मानवाकार एव । अवतारसदृशो लक्ष्यते निर्माणकायः । तस्य च रूपं प्रतिबिम्ब एव । भगवतो महाकरुणालम्बनं च प्रतिबिम्बसमा शून्यता । स एव निर्माणकायः बुद्धप्रतिमामूलम् । रूपकारितापि ततो ध्यानमूला । एवं रूपं स्वभावशून्यं प्रतिबिम्बमात्रं ध्यानस्फुटाभम् । शान्तश्चास्वादोऽस्य

रूपस्य तत्त्वं भावयतः। महाभारतस्य शान्तरसत्वमाचार्यैरुक्तं प्रसिद्धम्, बौद्धकाव्येष्वपि शान्तप्रकर्षः स्फुटमेव लक्ष्यते[14]।

स्वभावेन विद्यमानं वस्तु रूपेण लक्ष्यत इति व्यवहारप्रसिद्धम्। बौद्धानां धर्मधर्मिणोरभेदप्रतिपत्तेः क्षणिकत्वप्रतिपत्तेश्च व्यक्ताव्यक्तयोर्लक्षणस्वभावयोः भेदोऽपि दुष्करः। लक्षणं प्रतिभासगोचरं रूपंम्, स्वभावश्च तद्हेतुर्बहिरर्थात्मक इति लक्षणस्वभावौ रूपस्वरूपभूतावेव। प्रतिभासाव्यवहितविषयत्वात् लक्षणं विज्ञानप्रकारो बाह्यवस्तुनि चार्थक्रियासामर्थ्यमपि। प्रतीतिहेतुभूतेन च वस्तुस्वभावेन प्रतीतिपूर्व-क्षणिकेन भाव्यमिति प्रतीत्यव्यवहितं वस्तुलक्षणं प्रतीत्याकार एवेति व्यवसातुं शक्यः। क्षणिकौ बाह्यप्रतिभासविषयौ अतुल्यक्षणिकाविति भिन्नावेव। बाह्यविषयस्य त्रैलोक्यव्यावृत्तस्वलक्षणत्वाद् न प्रतिभासविषये लक्षणे तस्य सादृश्यमनुकारो वा संभवति। प्रतीतलक्षणं चाभिलापसर्गात् सामान्यलक्षणमुच्यते। एवं प्रतिभासविषयत्वाद् लक्षणं बाह्यार्थस्य प्रत्यक्षं रूपम्, बुद्धिविषयस्तु संङ्केतसंसर्गाद् विकल्पितं सामान्यलक्षणम्। सामान्यलक्षणमवस्तुविषयमपि परम्परया संवादिभ्रमेण वस्तुज्ञापकमिति लक्षणं स्वभावात्मकं रूपं च वस्तुगतमिति शक्यते वक्तुम्। प्रतिभासभूमौ रूपमतर्क्यमव्यवहितं यथोपस्थितगृहीतं च, विकल्पभूमौ च रूपं ज्ञानाभ्यन्तरविषय एव। भूमिभेदेन रूपं विषयस्य प्रतिभासः अभिज्ञापकं लक्षणं सङ्केतश्च।

ननु रूपसौष्ठवबुद्धिः अनयोर्भूमिकयोः क्व निरूपणीया, व्यवहारे रूपसुषमा पूर्वसिद्धवत् प्रतीयमानापि न निरपेक्षवस्तुधर्मतया लक्ष्यते। एवं च प्रतिभासाध्यवसाययोर्मध्यस्थिता सोभयतो बाधितैवेति चेत्।

**कल्पना द्विविधा प्रोक्ता लोकधर्मानुगामिनी।**
**नैरात्म्यभावनाद् धर्मा विमला भान्ति निर्वृताः॥ २३॥**

वस्तुतो भूमिद्वयावगाहिनी कल्पना द्विविधा द्रष्टव्या। प्रत्यक्षपृष्ठभाविविकल्पात्मना सा प्रतिभासविषयं निमित्तीकुर्वती ज्ञानालम्बनं विधत्ते। नामादिविकल्पात्मना तु तमेव विषयमध्यवस्यति। प्रथमा कल्पना स्वभावविकल्पो वितर्को वेत्युच्यते। अपरा मानसी प्रज्ञेति यत्र

निरूपण-विकल्पो विचारो वानुस्मृतिसहितो ग्राह्यः । द्वितीयकल्पनापुरस्सरं च वेदनासम्प्रयुक्तं जायते विज्ञानम्, तथा चोक्तम्–"चैतसिकं हि सुख-दुःखं प्रायेण विकल्पनादुत्पद्यते" (कोशः, २.८) एव च सुखसम्प्रयुक्तत्वात् सौन्दर्यभावनाविषयस्य स बुद्धिविकल्प एवं निश्चेतव्यो न बाह्यविषयः। विज्ञानवादशून्यवादयोस्तु बाह्यविषय एव निषिद्धो बुद्ध्याकारमात्रता प्रतिबिम्बमात्रता वास्य प्रतिपादिता । सर्वथा तु रूपसुषमा न बाह्यार्थविशेषनिबन्धना प्रत्युत विकल्पनाविशेषनिबन्धना । तल्लक्षणानि विषयाणां विचार्यमाणानि अनित्यत्वादिलक्षणैरभिभूयन्ते, विषयाश्च ततो हेयपक्षे स्थापिता वैराग्येणालम्ब्यन्ते । तथा च तन्निरूपणं काव्ये कलासु वा दुःखापगमप्रतीतिव्यंञ्जकत्वाद् रमणीयं भाति । सर्वधर्माणां शून्यतावबोधात्, सर्वधर्माश्च बुद्धत्वमिति बोधाद्वा कामरूपारूपलोकबन्धनातिक्रमाद् या परमा शान्तिरनुभूयते तदनुकूलकल्पनयापि काव्यकलयोर्लक्ष्यते रमणीयताविशेषः ।

प्रवृत्तिनिवृत्तिप्रधानयोः ब्राह्मणश्रमणवादयोर्विरोधः कालेनाशाम्यत् । महायाने औपनिषदब्रह्मवादः शून्याख्यया स्मृतिपुराणेषु च निवृत्तिमार्गोऽङ्गीकृतः । ततश्च परमार्थसतो जगतश्च बिम्ब-प्रतिबिम्बभावकृतोऽभेद एव प्रायेण प्रतिपन्नो माहायानिकैर्वेदान्तिभिश्च । अन्यैरपि लोकोत्तरमहिमशालिनः पुरुषा ईश्वरसिद्धबुद्धजिनादयो भक्तिविषयाः कल्पिता येषां चरितानि लोकसदृशविसदृशानि भावनीयानि काव्यकलादिषु निरूपणीयानि च । एवं मानवलोके मानवोत्तरसतः प्रभा मानवोत्तरे च सति मानवी प्रतिमा जनैः श्रद्धालोचनगोचरीकृता ।

मौर्यकालाद् गुप्तकालावधिविततं दर्शितनाट्यशिल्पकाव्याद्युत्कर्षं विद्याकलासम्प्रदायप्रमाणभूतमाधुनिकाः श्रेण्यमाचक्षते युगमितिहासविदः । ततः पूर्वतरः कालः लुप्तावशेषिताल्पकाव्यविभवः लुप्तप्रायाशेषशिल्पकृतिरपि कथञ्चिदनुमेयसौन्दर्यसाधनमार्गः । अनुमानसाधनं तु अवशिष्टकाव्यलक्षणानि संगीतादिकलाविवरणानि च । लक्ष्यते च ततः काव्यकलादिसाध्यो रमणीयत्वपदप्रतिष्ठाप्योऽतिशयो दृश्यरूपमतिक्रम्यैव स्थितः । यज्ञविधिकल्पितरूपनिष्पाद्ये वैदिकोपासने देवप्रतिमोपयोगोऽविदित एव । प्राचीनाः

श्रमणा अपि प्रतिमाविधानालसा एव लक्ष्यन्ते । तथापि मौर्यशुङ्गयुगयोः शिल्पोत्कर्षस्ततः पूर्वतरयुगागतपरम्परासमृद्धिं सूचयति । न च पारसीकयवनशिल्पिप्रभाव एव तत्र हेतुत्वेन कल्पनीयः प्रवृत्तिभेदस्य स्फुटसंलक्ष्यत्वात् ।

**जनप्रधानं वेदानां युगं जानपदं ततः ।**
**साम्राज्यं च ततस्तन्त्रं सामन्तानामेव च ॥ २४ ॥**

**युगानुक्रमतश्चैवमभेदि रूपकल्पना ।**
**प्रतीकं लक्षणं चैव प्रतिमालङ्कृतिर्भिदा ॥ २५ ॥**

वैदिकजानपदसाम्राज्यसामन्तयुगेषु चतुर्षु रूपतत्त्वं चतुर्धावधारितं लक्ष्यते । संक्षेपेण संङ्केत-लक्षण-प्रतिमा-लंङ्कारात्मकानि तानि चत्वार्यवधारणानि । वेदेषूपलभ्या देवच्छविः लोकातिशायिनीमेवाविर्भावयति शोभाम् । इतिहासकाव्येष्वपि वीरचरितं सामान्यलोकचरितमतिशेते गुणकर्मभिरपूर्वमिव प्राजापत्यं सर्गं चावतारयति । प्राचीनश्रमणकाव्येष्वपि रूपातीत एवार्थो गवेष्यते । लोकप्रवृत्तिप्रत्याख्यानपुरस्सरं च वैराग्यशान्तिसमाधितपःप्रभृतिवृत्तयोऽभिव्यज्यन्ते । समस्तेऽस्मिन् वाङ्मये दृश्यरूपमप्रधानम् । देवत्वं वा स्यात्, वीरत्वं वा स्यात्, न तद् दृश्यरूपेणाभिज्ञेयं विवेकगोचरगुणकर्ममहिम्नैव तद् ज्ञेयम् । यथा निगूहितात्मानः पाण्डवाः गृहीतसारथिवेषो वासुदेवो वा तापसवेषौ वा रामलक्ष्मणौ न दृश्यरूपेण अभिज्ञेयास्तथा वस्तुतः सर्व एव वीरा देवांशावतारत्वाद् मानवा अपि न तथात्वेनैव सम्यग् विज्ञेयस्वभावाः । हनूमदादयो वानरकाया अपि देवकल्पा वीरास्तत्र स्थूलं निदर्शनम् । "परोक्षप्रिया हि देवा" इति प्रसिद्धमेव, वीरा अपि रामकृष्णादयो मानवरूपनिगूहितस्वतेजसो न सुविज्ञेयचरित्राः, उक्तं हि–"लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति" इति ।

न च शिल्पनाट्यसम्प्रदाययोर्देवादीनां प्रदर्शनमुपलभ्यत एवेति वक्तव्यं तत्र प्रमाणवैशिष्ट्ये वेशवैशिष्ट्ये एव प्रधानतया आग्रहाद् न रूपानुकृतौ । यत्प्रदर्श्यते तदभिज्ञापकं साङ्केतिकं लक्षणमेव न यथार्थं प्रातिरूप्यम्, अनुकार्यरूपस्यैवाभावात् । न च नाट्यशिल्पयोरनुकृतिवादो नानादेशीयपरम्परासु प्राचीनकालादेव प्रसिद्धो भरतारस्त्वादिभिर्मनीषिभिः समर्थितो मूलमनुकार्यं रूपं प्रतिपादयत्येवेति वक्तव्यम्, तत्रारूपस्य तत्त्वात्मकस्यैव

मूलस्य विवक्षितत्वात् । अनुकरणमपि तत्र साङ्केतिकनिर्देशानुसारेण तत्त्वानुभावनमनुकीर्तनं वा । न तु प्रतिरूपणम् । शिल्पागमस्य मूलतो देवोपासनापरत्वाद् लौकिकार्थानां तत्र निवेशः अङ्गभावेन गौण एव । देवतानिरूपणं तत्र आगमसिद्धैरेव लक्षणप्रमाणादिनिर्देशैः ध्यानोपासनोपयोगार्थम् ।

एवं तत्त्वविद्यैव (आइडियॉलॉजी) मूर्तिविद्याधारो (=आइकनोग्रफी ) भवति । यथा भगवतो बुद्धस्य भरहुतसांचीस्तूपयो रूपकायस्य पूतिकायत्वाभ्युपगमात् प्रतिमालेखनं विनैव औपाधिकैः संङ्केतैर्निर्देशः प्रस्तुतः, अनन्तरं च अनास्रवरूपनिर्माणकायादितत्त्वेषु प्रतिष्ठितेषु सम्यक्सम्बुद्धलक्षणसंयुक्तया ध्यानयोग्यया प्रतिमया निर्देशो व्यधायि । यथा वा भगवतः शिवस्य जगन्मूलस्तम्भस्य ज्योतिर्मयस्य लिङ्गरूपेण निर्देशः । आगमप्रसिद्धानि देवाख्यानान्यपि तथैव बुद्ध्यालोच्यान्यपि संङ्केतसाहाय्येन रूपणीयानि शिल्पपरम्परायाम् । कालान्तरे शिल्पपरम्परासिद्धानि रूपाणि प्राकृतजनैः संस्कारवशाद् उपासनाव्यतिरेकेऽपि प्रकृतिसिद्धरूपाणीव व्यलोक्यन्त । ततश्च लोकचरितालेखनमिव शिल्पिभिः स्वच्छन्दया कल्पनया शास्त्राविरोधेऽपि नयनमनोहारीणि रूपाणि रञ्जनार्थं निरमीयन्त । परवर्तिनि शिल्पसम्प्रदाये तु तानि काल्पनिकानि आलङ्कारिकाणि रूपाणि शास्त्रीयनिर्देशेषु संगृहीतानि । लोकोऽपि क्रमेण शैल्पिकानि रूपाणि रञ्जकैन्द्रियाभासतयैव मुख्यतयाग्रहीत् तथा चाधुनिकसमीक्षकवर्गोऽपि । एवं यक्षीप्रतिमा देवप्रतिमाभ्यो रम्यतरा अध्यवस्यन्ति बहवो नूतनाः कलाविदः । तथा लौकिकरूपाणां यथादृष्टनिरूपणं पाश्चात्यपरम्परायां बहुमतम् । प्राचीने युगे तत्र जातीयस्वरूपानुगतं निर्दोषं निरूपणं सामान्यलक्षणप्रधानं शिल्पिनामभीष्टम्, आधुनिके युगे तु व्यक्तिचरित्रनिरूपणं स्वलक्षणप्रधानं शिल्पादर्श इति व्याख्यातं विद्वद्भिः । उभयथापि रूपं स्वभावस्य प्रत्यक्षोपदर्शकतयैवावधारितम् । लौकिकार्थविषयेऽनवद्यैवैषा प्रवृत्तिः सर्वत्र चालोचनपथमुपैति । तथापि देवाद्यलौकिकार्थविषये प्राचीनकाले सा नादर्तव्यासीत्, तत्र दृश्यात्

संङ्केतस्यैव प्राधान्यात् । तद्दृष्ट्या इन्द्रियगणविलोभिरूपं हेयपक्ष एव न्यस्तम् । तद्वैपरीत्येन परमव्योम्नि स्थितस्य शाश्वतस्य धर्मस्य प्रातीकिकं रूपमेव विधीयते कर्मानुष्ठानविधानेन । यथा देवा आदौ चक्रुस्तथैव मनुष्यैरधुना विधेयम् ऋतसूत्रानुसरणेन । आगमविहितानि कर्माण्यनुष्ठीयन्ते अदृष्टफलानि, न तु दृष्टफलानि तत्र प्रयोजनीयानि, विधिवितानश्च व्यवस्थितत्वाद् रूपमिति वक्तुं शक्यते । एवं देवशिल्पेष्वपि रूपं नेन्द्रियसन्तर्पणार्थम् उपासनासङ्केतग्रहणार्थमेव तु । यद्रूपमिन्द्रियाणि मोहयति तन्मायिकमेव । मायापरवशः पुरुषः रूपसृष्टिमवेक्षमाणः स्रष्टारमेवादृश्यं विस्मरति । यथार्थं शिल्पं विद्याभागीयं नाविद्याभागीयम् । न तद्धि प्राकृतरूपानुविधानम्, तद्हि आत्मकृतिरेव । "आत्मकृतिर्वै शिल्पम्" अस्याधारस्तु प्रमाणविज्ञानम्, न रूपानुकृतिः ।

वैदिकयुगोत्तरे जनपदकाले रूपशब्दस्य प्रयोगो नानार्थेषु विरूढ़ः । परिणममाना विषया रूपाद् रूपान्तरं यान्तो लक्षिता यथा शब्दा भिन्नप्रयोगेषु । पाणिनिना च ततो निरूपिताः शब्दरूपभेदाः, सूचितं च-"स्वं रूपं शब्दस्याशब्दसंज्ञायाम्" । नाट्यसम्प्रदाये रूपकादिषु रूपं नाट्यप्रकारो यत्रार्थः आरोपद्वारा दर्श्यते । रजतादौ आहत्य लक्षणारोपाद् रूप्यकाभिधेया मुद्राभवन्ति । नानाकार्येषु नानावस्थासु च पदार्था नानाप्रकारा लक्ष्यन्ते । तदेव च सापेक्षं लक्षणं रूपमित्यवधारयितुं शक्यम् । इदं च रूपस्य लक्षणात्मकमवधारणं प्राचीनबौद्धदार्शनिकैर्यथा परिष्कृतं तत्पूर्वमेव व्याख्यायि ।

शिल्पनाट्यादिभी रूपनिर्माणस्य रूपप्रदर्शनस्य च प्राधान्यं लक्ष्यते श्रेण्ययुगे । द्विधा च लक्ष्यते रूपप्रस्तुतिरत्र ध्यानालम्बनतया मनोरञ्जकतया च । मथुरादिषूपलब्धयक्षादिप्रतिमासु रञ्जकपक्षः, बुद्धादिप्रतिमासु च ध्यानोपयोगिपक्षः स्फुटं दृश्यते । उभयथापि रूपमत्र प्रतिबिम्बः प्रतिमा वा स्वप्रतीत्या निगूढार्थव्यञ्जकम् । व्यञ्जकता च द्विविधा रक्तिभक्तिप्रवणा समन्वितापि लक्ष्यतेऽस्य युगस्य विशिष्टासु कृतिषु । अजन्ताचित्रा-ण्युहरन्तीमं दृष्टादृष्टयोर्लौकिकालौकिकयोः प्रवृत्तिनिवृत्त्योः परिहृतविरोध-

मिवान्वयम् । समन्वयवृत्तिश्चेयं सामरस्यपरा परावृत्तिरिति शक्यतेऽभिधातुम् । शिल्पकाव्यसंसारस्त्रैलोक्यानुकृत्या वैश्वरूप्यं निदर्शयन् लोकोत्तरमप्यर्थं व्यञ्जयन् आस्वाद्यतां ध्यानाराध्यतां च सममेव न्यरूपयत् । नृत्येनाभिनयेन चित्रालेखनेन मूर्तिविधानेन नादसाधनया शब्दसाधनेन च रूपाणि सृजता सुवर्णवर्ष इव रसोऽस्मिन् युगे न्यषिच्यत ।

श्रेण्ययुगस्य प्रतिनिधितया समीक्षणीयः कविकुलगुरुः कालिदासः । श्रीमदरविन्दमहर्षिभिरुक्तं कालिदासो भारतीयसौन्दर्यबुद्धेः सर्वोत्कृष्टः प्रतिनिधिरिति, तैस्तु सौन्दर्यबुद्धिर्धर्मबुद्धेस्तत्त्वबुद्धेश्च विवेचिता व्यासवाल्मीकी च तत्त्वधर्मबुद्ध्योः प्रतिनिधिकवी इत्यपि प्रत्यपादि । तत्त्वधर्मसौन्दर्यबुद्धयस्तु परस्परोपरक्ता एव समन्विताः कालिदासे लक्ष्यन्ते मानवपर्येषणाया मौलिकाभेदात् । सौन्दर्यविवक्षया कविना रम्यत्वं रूपं चेत्युभयं प्रयुक्तम्, यथा—

**"सरसिजमनुविद्धं शैवलेनापि रम्यं**
**मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।**
**इयमधिकमनोज्ञा वल्कलेनापि तन्वी**
**किमिव हि मधुराणां मण्डनं नाकृतीनाम्"॥**

अत्राकृतिर्विशेष्यतया अभिहिता विशेषणानि च रम्य-मनोज्ञ-मधुरशब्दैरुक्तानि, लक्ष्मीशब्दोऽप्यत्र सौन्दर्यमभिधत्ते । सौन्दर्यस्य च निसर्गसिद्धत्वं दोषसहिष्णुत्वं चात्र विवक्षितम् । स्मर्तव्यं चात्र अमरोक्तम्—

**"सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् ।**
**कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम् ॥"**

**"प्रियेषु सौभाग्यफला हि चारुते"**ति ब्रुवन् महाकविः चारुत्वस्य लक्षणं प्रियाणां प्रीतिजनकत्वमेवाह । सहजापि चारुता न सर्वस्य प्रीतिं जनयति, प्रियस्य जनयन्त्येव सफलायते । अत्र प्रियत्वं चारुत्वापेक्षया उत्तमोगुणोऽभिमतः । अमरेणापि प्रियत्वं चारुत्वाद् विवेचितम्"

**"अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्"** इत्यभिदधता । रूपमात्रजन्या प्रीतिः सुखमेव तात्कालिकं तज्जन्यः कामोऽपि अनित्यः । न स प्रेम्णः प्रियत्वाद् वा अभिन्नः । "प्रेमा ना प्रियता हार्दं प्रेम स्नेह" इति प्रेमनामानि कामनामभ्यो भिन्नतया परिगणितानि–"अथ दोहदम् । इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः ॥ कामोऽभिलाषस्तर्षश्च" इति । भेदश्च कामप्रेम्णोर्महाकविना कुमारसम्भवे रतिदहनप्रसङ्गेन स्पष्टीकृतः । भवभूतिना तु बाह्यरूपमनित्योपाधिरेव वर्णितः– "व्यतिषजति पदार्थानान्तरः कोऽपि हेतुर्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्तीति" वदता । कालिदासो रूपं कामरूपालम्बनमुद्दीपनं च वर्णयन् न तात्कालिकीं प्रीतिमनित्यं कामं वा बहु मेने, प्रमादहेतुत्वमपि तस्य निदर्शयामास । शप्त इवायं प्रमादो यथा मेघे शाकुन्तले च दर्शितम् । कामरूपो मेघः कविकल्पनेव सर्वत्र प्रकृतौ सौन्दर्यं वेदयते, कान्तायमानायाः प्रकृतेः न कोपि रूपविशेषः स्वरमणीयतया मेघं रसिकमपि स्वासक्तिकाराबन्धने सर्वथा निग्रहीतुं शक्नोति । यच्चोक्तं "कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेष्विति" तत्रापि सूचितं गभीरं रहस्यं कविना चेतनाचेतनाध्यासादेव हि कामः प्रवर्तते । आदौ तु सदीक्षामयः कामः लोकसृष्टिहेतुर्मनोबीजतया प्रसिद्धः, तत्प्रेरितो रूपलोकं सृजंश्च स्रष्टा स्वामेकाकितामतिक्रामति, सृष्टिमध्ये च पुनः कामाविर्भावो मनोभवात्मा प्राणिनो व्यतिषजति तत्पार्थक्यमपाकुर्वन्निव मालिन्यात्तापयन्नपि । विषयमात्ररतिमलाद् विशोधितश्चाविर्भावयति दिव्यं कामं चिरविरहज-तापविमुक्तं प्रेमराशीभूतम् । प्राकृतः कामोऽध्यासमूलो विषया-सक्तिबन्धनो दृश्यते प्रमादिनि यक्षे गगनादिव दूराद् विषयसौन्दर्यं प्रेक्षमाणा तु कविकल्पना मेघीकृता लक्ष्यते । कामशुद्धेः प्रेमाविर्भावस्तु कुमारे शाकुन्तले च निदर्शितः ।

न महाकविः निवृत्तिमार्गाग्रहेण कामं तिरस्करोति । धर्माविरुद्धः कामो हि भगवतो विभूतिरेव । एवं च रूपस्य कामहेतुत्वं व्यभिचारित्वे प्रमादहेतुत्वे च दोषो नाभिलाषप्रीतिजनकत्वे । सौन्दर्यास्वादनं दिव्य-

विभूतिसाक्षात्कार एव, न तु ततः प्रमदितव्यम् । तथोक्तं महाकविना- यदुच्यते पार्वति पापवृत्तये न रूपमित्यव्यभिचारि तद् वचः" ॥

एवं सौन्दर्यं सहजप्रीत्यभिलाषजनकम् । अभिलाषोऽपि विवेककृपणः कालेन विवेकोदयात् परिणमते इष्टवस्तूपचितरसे प्रेमराशौ । तथा च सौन्दर्यमपि भिन्नदृशा संलक्ष्यते परिवर्तमानभावानुरूपम् । सकामेन मनसा प्रत्यक्षीकृतं रूपं शकुन्तलाया इत्थं वर्ण्यते– 'चित्रे निवेश्य परिकल्पितसत्त्वयोगा, रूपोच्चयेन मनसा विधिना कृता नु" । चित्रोपमं रूपमत्र सम्यग्वर्णसंस्थानप्रमाणसंनिवेशम्, चित्रमप्यत्र तिरस्कृतबाह्योपादानं सौन्दर्योपादानसृष्टरूपम् । तच्च भोग्यतया अनास्वादितरसमिति उत्प्रेक्षितम् । कालान्तरे विशेषतया विस्मृतमपि तत् सामान्यतयानुभूते रम्यविषये पर्युत्सुकयति चेतः । रम्यत्वप्रतीतेरिदं सामान्यं रूपं यत्–

**रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्**
**पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः ।**
**तच्चेतसा स्मरति नूनमबोधपूर्वं**
**भावस्थिराणि जननान्तरसौहृदानि ॥**

रम्यत्वप्रतीत्या संस्कारावस्थकिञ्चिदान्दोलितभावप्रभावेण चेतः प्रत्युपस्थितसुखदुःखभोगाद् दूरमिव अव्यक्ततया भासमानं किमपि स्मरतीवाध्यायतीव । इयमेव रम्यत्वस्य सामान्यतया प्रतीतिः, यत्र मनो रमयन् विषयोऽव्यक्तं भावमस्फुटं स्मृतिमिवोद्दीपयति । यत्राकृतिविशेषे रम्यत्वप्रतीतिस्तत्र स्वमनःकल्पितमिव रूपमालक्ष्यत आस्वाद्यम् । सा च रम्यत्वविशेषप्रतीतिः अव्यक्तविशेषतयोद्दीपिता निगूढार्थसङ्केत इव विषयमाचष्टे ततश्च भावोल्बणं स्मृतिचित्रमिव प्रतिभासयति विषयम्, तथा चोक्तं–

**दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन ।**
**स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता" ॥**

एवं नानावतरति सौन्दर्यबुद्धिः । प्रथमाभिपाते सामान्यतया च प्रत्यक्षीकृते विषये अस्फुटभावाभिव्यंजकत्वमेव रम्यत्वम् । आकारविशेषतया प्रत्यक्षीकृते विषये चित्राभं प्रतीयते रम्यत्वम् । भाव्यमाने च तस्मिन् स्फुट-भाव-व्यञ्जकत्वमेव रम्यत्वं प्रतिभाति । भावनीयचित्रोपमाकृतिमत्त्वं च सौन्दर्यलक्षणमेवं प्रतिपादयितुं शक्यम् । तस्य प्राकृतेषु दृश्येषु स्त्रीपुरुषेषु काव्यकलादौ च व्याप्तिः लक्ष्या । काञ्चनपद्मसंनिभंहि सौन्दर्यं यत्र रूपं भावव्यञ्जकत्वात् ससारम् । रूपं च बहुविधमपि अन्ततः आत्मविनिर्भास एव । रूपमात्रं प्रत्यक्षा शैवी तनुरेव । तदुक्तम् "प्रत्यक्षाभिस्तनुभिरवतु वस्ताभिरष्टाभिरीशः " । वैदिके आगमिके च सम्प्रदाये देवस्य विश्वरूपेणाभिव्यक्तिः प्रसिद्धा, श्रामण्यप्रभावेण तत्र हेयत्वकल्पना प्रचारमागता । अनात्मीयं च सौन्दर्यं मारपाश एवेति संशयोऽपि समर्थितः । कालिदासेन तु दिव्यमिथुनस्वरूपभूतं प्रेमैव सर्वोत्कर्षेण प्रतिपादितम् । तद्वर्णनेनैव च स्वकाव्ययात्रापि गन्तव्यं प्रापिता ।

शास्त्रीयसम्प्रदायोऽस्मिन् युगे मुख्यतया नाट्यशास्त्रे विष्णुधर्मोत्तरपुराणे च लक्षयितुं शक्यः । उभयोरेवानयोः शास्त्रयोः नानाकाव्यकलादिप्रभेदाः स्वभावान्वयपुरस्सरं संगमय्य प्रदर्शिताः । अन्तःसम्बन्धश्च तेषां रचना-प्रवृत्तिकृतो रचयितृसम्बन्धकृतश्च । कलामात्रादिकालमानयोजनासु ताललयच्छन्दांसि प्रतिष्ठितानि तैश्च गत्यात्मकं नृत्तं नियम्यते, तदेवाभिनयसंयुक्तं नृत्यपदमारोहति, नृत्यमुद्राभङ्गयः प्रतिमानान्युपदर्शयन्ति रूपविन्यासैषिणां शिल्पिनाम् । नृत्यमेव शिल्पार्पितं स्थिरमूर्तिवत् शिल्पमेव च नृत्यार्पितं द्रवद्रूपमिवान्योन्यप्रतिमे इव पस्पृधाते । स्वरपदयुतेन च तालेन सृज्यते संगीतं पदयुतेन च च्छन्दसा काव्यम् । नृत्यसंगीतकाव्यानि समवेतानि नाट्ये । पुनश्च काव्यं गर्भीकृतनाट्यमिव, नाट्यं च प्रबन्धायमानकाव्यमिवाकल्प्यत । रूपसृष्टौ च निखिलकलासु विज्ञानानु-शासनस्य स्वच्छन्दकल्पनया सह समन्विता प्रवृत्तिः संविदुल्लासमयात्म-परामर्शरूपा रचना प्राणच्छन्दोवद् व्याप्ता । प्रतिभाकेन्द्राद् निर्भासिता इव रश्मयो रूपमण्डलमिव कलासंसारं तदानीं वितेनुः । रूपलक्षणप्रमाणानि

भावरसादयश्च पदार्था मानानीव । इतिहासपुराणागमादिभ्यः समुद्धृता विषयाः कक्ष्याविभागा इव । नानाराजसभासु विचरन्तः कविसूत्रधाररूकाराः श्रेणीव्यवस्थिताश्च तद्गणाः पृथक्-पृथक् कारव इ प्रतिभाविज्ञानसूत्रधारेण प्रयोजिता नियताश्च अरचयन् तद्युगकलाप्रासादम् । देवायतनानि श्रेष्ठिनां सौधानि राजप्रासादाः भिक्षुविहाराश्च प्रकाशयामासुः कलाश्रियं संरक्षणपोषणं च व्यदधुः कलाकृताम् ।

तत्तत्कलाशास्त्रेषु दार्शनिकविवेचनस्य गौणत्वेऽपि तदर्थमपेक्षितानि उद्देश्य-विभाग-लक्षणानि सप्रमाणं निरूपितानि लक्ष्यन्ते । यथास्थितविषयवर्णनात्मकेष्वपि तेषु सदसद्विवेचनापेक्षितानि प्रस्तूयन्ते मानानि । ततश्च विवेक एव कश्चित्सहृदयतान्तर्निगूढः प्रकाशते । यथा संगीते, चिरादतीते सामपरायणे युगेऽप्रचारं च गच्छति गान्धर्वे नाट्यसाफल्यार्थं सामाजिकरञ्जनार्थं च ध्रुवारागादिगानप्रवृत्तिर्ववृधे । अदृष्टमप्रधानीभूतम्, रक्तिश्च प्रधानीकृता, अवधानं विस्मृतमिव, लौकिकगेयवस्तून्युपात्तानि पदेषु, गान्धारग्राम उत्सन्नः, तालविधानं सरलीकृतम् । यद्यपि श्रुतिस्वरादीनां भावरसादिव्यञ्जकत्वं जातिगानेऽपि प्रसिद्धं तथापि ध्रुवारागादिषु तन्महिमा वृद्धिं गतः संगीतेऽपि रसवादव्याप्तिमपोषयत् ।

ननु संगीते विभावादीनामभावात् पदप्रयोगस्याप्यनावश्यकत्वात् कथं रसोत्पत्तिस्तत्र युज्येतेति चेत्,

श्रूयताम्, नादात्मकं संगीतं स्पन्दनविशेषलक्षितध्वनिवैशिष्ट्यग्राहिणा संस्कारविशेषवासितेनैव श्रोत्रद्वारेण मनसा सम्यग् ग्राह्यम् । तथा गृहीते स्वरयोजनात्मके नादे कल्पनारूढे च तन्मयीभूते च चित्ते स्वरतालादयोऽनादिवासनयैव प्रकाशयन्ति भावान् संवित्स्पन्दनालम्बनानव्यक्तान् । हृदयसत्त्वमेव स्पन्दनविशेषसंस्पृष्टं तप्यते द्रवीभवति च तथा भावविग्रहमिवाधत्तेऽनवधारितविशेषम् । स्वरताललया अत्रोद्दीपनाः चित्तस्पन्दनप्रतिबिम्बितम् आत्मचैतन्यमेवालम्बनम्, चित्तवृत्तिरेव च भावः । कयाचित् स्वरयोजनया चित्तं द्रवति कयाचिदोजोऽनुभवति, कयाचिद् नृत्यतीव, कयाचिद् अवसीदतीव । द्रुतलयेन चित्तं धावतीव, विवादिना स्वरेण क्षुभ्यतीव । स्मर्यते च हास्यश्रृङ्गारयोः मध्यमपञ्चमौ वीररौद्राद्भुतेषु षड्जर्षभौ,

गान्धारनिषादौ करुणे, बीभत्सभयानकयोः धैवतः प्रयोक्तव्य इति । तथा च द्रुतमध्यविलम्बितास्त्रयो लया रसेषूपपाद्याः, तत्र हास्यश्रृङ्गारयोर्मध्यलयः, करुणे विलम्बितो वीररौद्राद्भुतबीभत्सभयानकेष्विति* ।

एवं संगीते त्रयः पक्षा विवेक्तुं शक्यन्ते । अस्ति प्रथमः अविकल्पिताविचारितरञ्जकः श्रुतिसंवेद्यो विषयः प्राकृतानामपि प्रीतिहेतुः । तत्रापि तारत्वमन्द्रत्व-द्रुतत्वमन्दत्व-अल्पत्वबहुत्व-कण्ठवैशिष्ट्यात्मानश्चत्वारो लक्ष्यन्ते गुणाः शिक्षितैरेव सम्यग्विवेच्याः । मात्राभेदेन अविचारितसुखहेतुत्वं सर्वेषाम् । द्वितीयः पक्षस्तु बुद्धिग्राह्यो स्वरादिरचनाविशेषो यस्यास्ति गणितमपि तत्त्वम् । तृतीयः पक्षस्तु तेषामेव वासनापेक्षा मर्मस्पर्शिता अव्यक्तभावव्यञ्जकता वा । प्रथमा सहजश्रुतिसुभगता सर्वत्रैवोपादीयते, न च तेनैव संगीतोत्कर्षः सम्पद्यते । द्वितीयो गणितादिनिपुणतापेक्षः स्वरतालादिविज्ञानात्मकः पाश्चात्त्यसंगीतसम्प्रदाये विशेषेण समादृतः । तृतीयो व्यञ्जकतापक्षो भारतीयपरम्परायां बहुमतः । उपासनासन्दर्भे भक्तेरुद्बोधनं संगीतेन लक्ष्यीकृतम्, ध्याने चित्तप्रशमनम्, नाट्योत्सवादिषु रञ्जकत्वं व्यञ्जकत्वं च । नानाविधत्वेऽपि संगीतस्य, तदुत्कर्षः तद्विज्ञैः प्रायः स्वीकृतः सात्विकसुखसघनभावसमाधिप्रवणसविमर्शान्तर्मुखास्वादैकतानतानुसन्धाने । अस्मिंश्च संगीतसाधने पाश्चात्त्यसंगीतव्यतिरेकेण तालवैचित्र्यसंयुक्तस्वरानुपूर्वीरहस्यान्येव विशेषेण गवेषितानि ।

इदं तु अवधेयं सङ्गीतोपलब्धरूपस्य वैलक्षण्यं तस्य कालिकत्वेनैव नियतम्, तदनुभूयते च चेतसा तल्लीनेन स्वगततया भावाभिन्नतयेति यावत् ।*

नृत्येऽपिच्छन्दोमयगतिमत्तयांशतः संगीततुल्या रूपानुभूतिः नतु तत्र नादस्य सहजान्तर्मुखता समाधिप्रवणता वा, बाह्यरूपाभासानामेव तत्र प्राधान्यात् । संगीते कालिकात्मप्रतीतेरान्तरं रूपं व्यज्यते, नृत्ये प्राणच्छन्दसः ।

---

*. द्र. प्रेमलता शर्मा, रससिद्धान्त (1988), पृ. 49-51.

*. तु. सुसन लैंगर, फॉर्म एन्ड फीलिंग (रूटलेज, 1976), पृ. 29 प्र.

उभयोरेव रूपाभासः काल-गति-विषयिचेतनानां प्रतीतिभिरविवेच्यतया तन्मयीभूतो लक्ष्यते। चले चास्मिन्नाभासे काल एवायमाकारितो गतिर्वा विषयी चेतनो वेति निश्चय एवात्र दुष्करः। तथापि विषयिताकार एवायमन्ततः स्वसमवेतकालगत्याकार इत्येव वक्तुं युक्तम्[§]।

शिल्पशास्त्राणि विचारयतां चित्रकलाषडङ्गानि तावत् प्रसिद्धानि। तथा च यशोधरेणोद्धृतम्—

**रूपभेदाः प्रमाणानि भाव-लावण्य-योजनम्।**
**सादृश्यं वर्णिकाभङ्ग इति चित्रं षडङ्गकम्॥** इति॥

चित्रकृत्सु मूर्धन्यभूतैः अवनीन्द्रनाथठाकुरमहोदयैरेषामङ्गानां यद् विवरणं विहितं तत् सुविदितमेव विदुषाम् इति नात्र प्रतन्यते। रूपादारभ्य चित्रं लावण्ये परिसमाप्यते। चित्रकृद्नानाविषयेषु रूपभेदान् पश्यति स्वलक्षणसामान्यलक्षणयुक्तानाकारविशेषान्। असंख्यत्वेऽपि तेषां विषयनिर्धारणेन रूपभेदा अपि निर्धार्यन्ते। न च प्रसिद्धानि जातीयरूपाण्येवात्राभिमतानीति वक्तव्यं तत्तद्व्यक्त्याकृतीनामपिचित्रविषयत्वेन स्वीकारप्रसिद्धेः। अथवा सादृश्यस्य पृथगङ्गत्वेनोल्लेखाद् रूपभेदेन विषयस्वभावसंङ्केता इव तत्प्रत्यक्षाभासा ग्राह्याः। यथा ध्यायी बाह्यं स्थूलं निमित्तं गृहीत्वा ततः प्रतिभागनिमित्तमुद्ग्रहनिमित्तं च गृह्णन् परिशुद्धं मनोमयं भास्वरं बिम्बं पश्यति तथैव चित्रकृदपि विषयाभासमालोक्य वस्तुस्वभावसंङ्केतविद्धं ध्यानतस्तत्र विलक्षणं रूपमुपलभते। तथा चावनीन्द्रनाथाचार्या आहुर्न चक्षुषैवापि तु मनसा गृह्यते रूपभेद इति। उदाहरन्ति ते शान्तिपर्वणः—

**ज्योतिः पश्यन्ति रूपाणि रूपं च बहुधा स्मृतम्।**
**ह्रस्वो दीर्घस्तथा स्थूलश्चतुरस्रोऽनुवृत्तवान्॥**
**शुक्लः कृष्णस्तथा रक्तः पीतो नीलोऽरुणस्तथा।**
**कठिनश्चिक्कणः श्लक्ष्णः पिच्छिलो मृदुदारुणः॥**

ज्योतिरेव विविधाकारं रूपभेदं वितनोति। न चक्षुषैव तत्र निहितं तत्त्वं सम्यगवबुध्यते। तदर्थं प्रबुद्धेन मनसापि भाव्यम्। अन्तःकरणज्योति-

---

§. तु. पूर्व. तत्रैव.

षैव वस्तुयाथार्थ्यं गृह्यते, चाक्षुषाभासस्तत्र निमित्तमेव । रूपभेदा न केवलं दृष्टाभासा अपि तु मानसबिम्बा बुद्धिप्रभेदाः पुरःस्थिताः, तथा हि

**व्यञ्जको वा यथालोको व्यङ्ग्यस्याकारतामियात् ।**
**सर्वार्थव्यञ्जकत्वाद् धीरर्थाकारा प्रदृश्यते ॥**

एवं च चित्रणीयरूपनिर्णयः चित्रकृतोऽन्तःकरणस्थप्रतिभानादेव, न बाह्यनिमित्तमात्रात् । इदमपि चावधानमर्हति, रूपं प्रत्यक्षतामेति, न तु भेदः प्रत्यक्षीकर्तुं शक्यते, तस्य धियैव परिच्छेद्यत्वात् । असंख्यसंसर्गा विषयाः कथं परिच्छेद्या इति तु ज्ञानप्रयोजनरुच्यादिसापेक्षम् । लोके भयहेतुरपि सर्पाकारो भगवति शिवे अलङ्कारायते । सर्पाकारतुल्यता च रज्जुमाला वेण्यादिषु लक्ष्यमाणापि तत्तद्भेदव्यवस्थाप्या भवति बुद्धिव्यवसायानुकूलैः सङ्कतैरेव । न च स्वसामान्यलक्षणयोर्व्यक्तिजातिभेदकयोः बाह्यवस्तुनिष्ठयोस्तथा प्रत्यक्षान्नावकाशोऽन्तरेव रूपनिर्णयस्य भ्रमातिरिक्तस्थले इति वाच्यम्, निर्विकल्पप्रत्यक्षे लक्षणानवधारणाद् विकल्पयोजने च प्रयोजनीयविकल्पोपादानस्य बुद्धिनिर्णयाधीनत्वात् । न हि चन्द्रोदधिवनादीनामिव नानारूपाणां स्त्रीपुरुषाणां वा व्यवहाराभ्यस्तसामान्यरूपाण्येव चित्रकृदपेक्षितरूपभेदं विवृण्वन्ति ।

बाह्यवस्तूनां दैर्घ्यादिपरिमितिरेव लोके प्रमाणमाख्यायते, कलासु तु तन्निर्धारणे मुख्यतया कलाकृद्हृदयसंवादिप्रमानुसारितैव । न प्रमाणानि गणितशास्त्रीयाङ्गुल्यादिमानमेव; अपि तु प्रमातृचैतन्यं नो यदन्तर्बहिरपि परिमितिमूलम्, यथोक्तम्–

**"मातुर्मानाभिनिष्पत्तिर्निष्पन्नं मेयमेति तत् ।**
**मेयाभिसङ्गतं तच्च मेयाभत्वं प्रपद्यते" ॥**

भावविषये प्रोक्तम्–"**निर्विकारात्मके चित्ते भावः प्रथमविक्रिया** " ।

पुनश्च–

**"शरीरेन्द्रियवर्गस्य विकाराणां विधायकाः ।**
**भावा विभावजनिताश्चित्तवृत्तय ईरिताः"** ॥ इति ।

विषयप्रत्यक्षेण विक्रियमाणचित्तं विषयं भावचक्षुषा पश्यति स्वान्तरालम्बनसंम्पुटितमिव । तथा निरूप्यमाणो विषयो भावव्यञ्जकतामाप्नोति ।

लावण्यविषये प्रसिद्धमेव वचनम्–

**मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा ।**
**प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥**

लावण्यमवयविवद् व्यज्यते न तु तत्र अवयवविभागेन लभ्योऽतिशयः । सादृश्यं नाम–"तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्वम्" । बाह्यवस्तूनां प्रत्यक्षं सादृश्यं सुविदितमेव यथा घटस्य घटान्तरेण । न तु तेनैव सादृश्याख्यमङ्गमवबुध्यते यद्विषये प्रोक्तम्–"चित्रे सादृश्यकरणं प्रधानं परिकीर्तितम्" । मनोभावबाह्यरूपयोः सादृश्यमेवात्र मुख्यम्, तेनैव चित्रस्य विषयसादृश्यं गम्यते । बाह्यार्थमुल्लिखदपि चित्रं मनोभावं प्रतिबिम्बयति । बाह्यार्थप्रतिरूपता अभ्यन्तरार्थव्यञ्जकता चेत्युभयं सङ्गतं सादृश्यमुपदर्शयति । उक्तम्–

**मूषासिक्तं यथा ताम्रं तन्निभं जायते तथा ।**
**रूपादीन् व्याप्नुवच्चित्तं तन्निभं दृश्यते ध्रुवम् ॥**

इदं त्ववधेयं व्यवहारे ज्ञानानुधावनकठिनेन चेतसा बाह्यविषयास्तटस्थतयैव आकार्यन्ते । द्रुतेन चेतसा तु गृहीता आकाराः स्वानुभूत्या रक्ता इव प्रतिभान्ति पुनरुद्बुद्धसंस्कारा भावमयाः । तथोक्तं मधुसूदनसरस्वतीपादैः–

**"चित्तद्रव्यं हि जतुवत् स्वभावात्कठिनात्मकम् ।**
**तापकैर्विविधैर्योगे द्रवत्वम्प्रतिपद्यते ॥**
**कामक्रोधभयस्नेहहर्षशोकदयादयः ।**
**तापकाश्चित्तजतुनः तच्छान्तौ कठिनं तु तत् ॥**
**द्रुते चित्ते विनिक्षिप्तः स्वाकारो यस्तु वस्तुना ।**
**संस्कारवासनाभावभावनाशब्दभागसौ ॥"**

वर्णिकाभङ्गस्तूलिकाप्रयोगवैविध्यमेव भावेरितं विषयानुरूपम् । वर्ण-निर्माणविधयस्तत्प्रयोगविधयस्तूलिकाप्रयोगविधयश्च नानापरम्परासु चित्र-कृत्सु च विविधा लक्ष्यन्ते । भारतीयपारम्पर्ये प्राचीने रेखाया एव प्राधान्यं तथा च प्रसिद्धम्–

**"रेखां प्रशंसन्त्याचार्या वर्तनीं च विचक्षणाः ।**
**स्त्रियो भूषणमिच्छन्ति वर्णाढ्यमितरे जनाः ॥"**

इति वचनं परीक्षकसम्मतमेव । अजिण्ठादिगुहाभित्तिचित्रेषु रेखा विन्यासवैलक्षण्येन सर्वेषामेव मनो हरन्ति अविच्छिन्नायताः सलया इव मसृणभङ्गबन्धुराः समग्राकारमेकप्रघट्टकेनेव समक्षमुपस्थापयन्त्यो मनोभावं व्यञ्जयन्त्यश्च । चीनपारसीकमुगलशैल्यस्ततो भिन्ना एव । आधुनिक-पाश्चात्त्यचित्रेषु तु वर्णविन्यासस्यैव प्राधान्यं यथास्थिताकारनिरूपणस्य च । प्राचीनभारतीयसम्प्रदाये सहजाबाधंगत्या रेखया मनोभावव्यञ्जनमेव बहुमतम्, प्राणच्छन्दःस्पन्दितेनेव चित्रेण भाव्यमिति हि चित्रसूत्रकारा ऊचुः ।

**"लसतीव च भूलम्बो बिभ्यतीव तथा नृप ।**
**हसतीव च माधुर्यं सजीव इव दृश्यते ॥**
**सश्वास इव यच्चित्रं तच्चित्रं शुभलक्षणम् ॥"**

एवं श्रेण्ययुगे काव्यचित्रशिल्पेषु रूपमापातरमणीयमपि प्रधानतया भावव्यञ्जकतयैव श्लाघ्यतापदमारूढम् । तदनन्तरवर्तिषु युगेषु प्रत्यक्षरूप-सौष्ठवमेवान्ये बहु मेनिरे । अलङ्कारमेव सौन्दर्यं मन्यमानाःतस्य प्रचुरप्रयोगेण काव्ये शिल्पे चाद्भुतं रूपलोकमनन्यं ससृजिरे । काव्येऽभिधायकशब्देष्वभिधेयार्थेषु वा चमत्कारावहं वैचित्र्यमेवालङ्कारः । तन्मूलं शब्दप्रयोगगतमसाधारण्यं रुच्यविरुद्धं शब्दार्थसाम्यानतिशायि च । शब्दार्थतुल्यताभङ्गे तु बहवो दोषा एव आपतन्ति, रुचिश्च सहृदयसंमतिरूपा प्रमाणेषु मूर्धन्यतमैव । असाधारण्यं पुनरसंख्यविधमपि वक्रोक्त्यौपम्यातिशयोक्तिश्लेषेषु प्रायेण संग्राह्यम् । सर्वत्रैव लोकाभ्यस्तं

प्रयोगं विवर्जयन् कविः सहृदयमपूर्वताजन्यविस्मयेन कौतुकेन चावर्जयति। शिल्पेऽपि निपुणप्रयुक्ता अलङ्कारा मोहयन्ति दर्शकान्। इदं त्ववधेयं माघनैषधादिषु काव्येषु खर्जूरवाहककोणार्कादिदेवायतनेषु प्रचुरालङ्कारेष्वपि न तत्सौन्दर्यमलङ्कारनिबन्धनं मुख्यतया।

एवं चतुर्षु प्रतीकलक्षणप्रतिमालङ्कारेष्वन्विष्टतत्त्वमपि रूपं भूयो विचारमर्हति। सर्वेष्वप्येतेषु तत्त्वेषु प्रत्यक्षाभासमपि रूपं स्वातिरिक्तार्थव्यञ्जकं लक्ष्यते। द्वौ च तस्य पक्षौ दृश्येते आभाससङ्केतौ। रम्यत्वमाभासगतोऽतिशयो वस्तुनिबन्धनः साङ्केतिकत्वनिबन्धनो वेति विचारयद्भिः प्रथमं प्राचीनालङ्कारिकाणां नवीनरूपवादिनां च पक्षो विषयीकर्तव्यः। कविः शब्दान् शिल्पी रञ्जकद्रव्यादीन्युपादाय स्वकृतिं रचयन् संनिवेशविशेषमेवोपादानद्रव्यस्य विधातुं समर्थः। एवं कविना शिल्पिना वा स्वोपादानाहितोऽतिशयो न रचनाविशेषादतिरिच्यते। शब्दरचनैव काव्यम्, रञ्जकतूलिकाविहितं रूपमेव चित्रम्, प्रस्तरादितक्षण-निर्मिता मूर्तिरेव शिल्पम्, कल्पनायोजितस्वरानुपूर्वी एव संगीतमित्यादि वक्तुं युक्तम्। सहृदयपरीक्षकोऽपि तत्र कृतिनिष्ठप्रत्यक्षयोग्यविशेषानेव पश्यति, तानेव रसयति वर्णयति च। तदतिरिक्तं यदपि तत्त्वं समालोच्य प्रतिपाद्यते तदसद्विकल्पितमेव रूपवादिनां मतम्। एवं च काव्ये शब्दप्रयोगवैचित्र्येण, रूपकर्मणि च वर्णाकारप्रमाणानां परस्परसंसर्गौचित्येन आवृत्तिविनिवृत्तिभेदाभेदविरोधाविरोधसादृश्यवैलक्षण्यसमनुपातसमन्वयादि-लक्षितविरचनेन सौन्दर्यं व्याख्येयं भवति। बाह्ये तु दृश्ये निसर्गत एव सदृशगुणोपलम्भेन सौन्दर्यप्रतीतिः। सर्वथा तु सुरचिताभास एव रूपातिशयः सौन्दर्यं नाम। कविवरेण च रवीन्द्रनाथेनापि एतदेव रूपनिश्चितं तत्त्वं सुमितिरित्याख्यायि।

आपातरमणीयमप्येतन्न क्षोदक्षमम्। रचनाकृद्धि स्वोपादानं स्वाभि-प्रायेण परिणामयन् स्वचित्तसङ्केतं तत्र निवेशयति। तत्संङ्केतमगृहीत्वा न तद्रचनार्थो बोद्धव्यः। यथा कश्चिल्लिप्यक्षराणि लिखेत्, पाठकश्च तत्राभिज्ञो न स्यात् कुटिला विसृमराश्च रेखा एव पश्येत्, न तु अर्थव्यञ्जकान् साङ्केतिकानाकारान्। एवमेव काव्येषु शिल्पकृतिषु च मन्तव्यम्। तत्रापि रूपं नाभासमात्रमैन्द्रियमशिक्षितस्यापि गोचरः,

रचनानिहितार्थसङ्केतस्य विद्यमानत्वात् । न च नैसर्गिकदृश्येषु रचनाया निरभिप्रायत्वाद् अर्थसङ्केताभावत्वं रूपस्य, तत्तुल्यतया च काव्यशिल्पादिष्वपि रूपस्य निरपेक्षत्वमिति वक्तव्यम्, निर्दोषरचनामात्रे प्रयोजनीयत्वाभासात् तथा च जडप्रकृतावपि विचित्ररचनावत्त्वात् पुरुषार्थत्वकल्पना लोकेन क्रियते । रेखा विभागं दिशं च सूचयति, सादृश्यमनुपातो वा सम्बन्धं सूचयति, नियमोऽन्तरन्वयं प्रकाशयति, सूर्योदयः प्रबोधयति, अन्धकारोऽवसादयति, पुष्पवर्णगन्धा भ्रमरादीनाकर्षन्ति, स्त्रीरूपं पुरुषमाकर्षति, आकाशसागरादयो नानाभावान्व्यक्ताव्यक्तान् जनयन्ति । काव्यादिषु कर्तुरज्ञानेऽपि साभिप्रायत्वबोधः स्फुट एव, न च सोऽभिप्रायः अभिधेयमात्रे इन्द्रियमात्रगोचरे रूपे वा विश्राम्यति । काव्येऽभिधेयमभिधीयत एव, न च तेनैव काव्यार्थः परिसमाप्यते, अभिधानाभिधेयनिहितविशेषेण स्वातिरिक्तार्थव्यञ्जनात् । चित्रे वर्णविच्छित्तिमात्रपरिसमाप्तरचनेऽपि वर्णाभासा ईरयन्तीव चैतन्यम् । न हि नीलोऽयमित्यभिज्ञानेनैव नीलसौन्दर्यमभिज्ञायते, चित्रकृता सहृदयेन चाभिज्ञेयविशेष एव सौन्दर्यप्रतीतिहेतुः संस्कारसापेक्षो नीलो विमलकान्तिर्नभः स्मारयेत्, चलहरिताभया युक्तो महोदधिं, कृष्णाभो मसीं, क्वचित्कृष्णं क्वचिद् इन्द्रनीलं, सरोवरं वा । तरङ्गदैर्घ्यविशेषाङ्किता रश्मयो दृशोः प्रतिफलिता नीलाद्याभासं जनयन्ति, नानावर्णाकारादिसंसृष्टा वर्णा अपूर्वरूपतामादधति । प्रकृतिसिद्धस्य संसर्गवैविध्याद् रूपान्तरणमेव रचना । तया प्रकृतेरतिरिक्त एवार्थो विधीयते । अपूर्वत्वमेवास्य तत्र व्यञ्जकत्वं विधत्ते । एवं कृतिगतोऽपि विशेषो रचनानिबन्धनः प्रकृत्यतीतं पौरुषमर्थं तत्र व्यनक्ति साङ्केतिकम् । बहुधा विरुद्धानामसम्बद्धानां वा समवधानाद् विरोधपरिहारार्थं समन्वयार्थं वा अन्विष्यतेऽभिप्रायो गम्यते चापूर्वार्थः स च न लोकस्थितो लोकदृष्टो वा । लोकप्रसिद्धार्थाकारास्तु लिपिचिह्नानीव प्रयुज्यन्ते स्वचित्तप्रकाशनार्थम् । न च चित्ररूपकलादिषु दृश्यत एव लौकिकार्थसादृश्यमिति वक्तव्यम्, तस्यापि दृष्टारोप्यादृष्टार्थप्रतिपादकत्वात् । यथा चीनलिप्यां "शङ्" इति वाच्यः संङ्केतः अधोरेखोपर्यूर्ध्वरेखां प्रदर्शयन् आरोहणं द्योतयति । कविः सृजतीति प्रसिद्धमेव ततश्च काव्यार्थस्य

दृष्टव्यतिरेकत्वं लोकोत्तरत्वं च सिद्ध्यति । वस्तुसद्द्रव्यसृष्टौ ईश्वरातिरिक्तस्य असामर्थ्यात्, मानवकविसृष्टिः मानस्येव भवितुमर्हति, सा च सङ्केतविद्धार्थोल्लेखिप्रत्ययमयी । सङ्केताकारा एव बहिरुपदर्शयितुं शक्याः, ते च काव्ये ध्वनिविशेषास्तच्चिह्नानि वा, चित्रेषु वर्णाकाराः संगीते स्वरादयः । द्रव्यगुणात्मकतया प्रकृतिसिद्धा अप्येते विषयाः सङ्केतार्थं स्वसामान्याकारतयैव प्रयुज्यन्ते, त आकाराश्च मनसोऽपरोक्षा अपि भवन्ति । परमार्थतस्तु चित्तमेव सङ्केतानां प्रभवभूमिः, शब्दविषये तत्प्रसिद्धमेव शास्त्रीयमतं पश्यन्त्यादितद्भेदनिरूपणपरम् । तथैव नादोऽपि चैतन्यप्रभवो रूपमपि ज्योतिःप्रभेदात्मकं चित्तबिन्दुप्रभवमेव । स्वप्नोऽत्र निदर्शनं यत्र विचित्रार्थसङ्केतायमानोऽपूर्वो लोकः सृज्यते चेतसैव । काव्ये कलासु च रूपमतः चैतन्यस्यैव रूपम्, न बाह्यार्थस्य ।

न चारूपं चैतन्यं कथमस्य रूपं कल्पनीयमिति चेत्, औपाधिकस्यैव रूपस्य ग्राह्यत्वात् । परिगृहीतदेहाद्युपाधिश्चेतनः स्ववासंनानुसारेण नामरूपोपाधिभ्यां मनोमयानि रूपाणि सृजति, प्रतिभाविवेकनिपुणता-संहितस्य तु तान्येव काव्याद्यात्मना परिणमन्ते । सोपाधिकचेतन एवात्मानं परमार्थतयान्विष्यन् विषयाकारैः कल्पयति, ते च चेतनभावप्रतिबिम्बा एव मन्तव्याः । अतः काव्यकलादिकीर्तनीयं रूपं न द्रव्यसहजधर्मो नापि कार्यसमर्थत्वेन तत्रोत्पादितः । रचनाकृद्हृदयसंवादिप्रतिबिम्बसङ्केतीकृत-रचनावत्वं स धर्मः । कः सङ्केतः प्रकृतोपयोगी, का प्रतिबिम्बकल्पना, को हृदयसंवादः, इति त्रयः प्रश्ना इदानीं विचार्याः ।

इच्छाकृतात्सम्बन्धात्स्वज्ञानेन विषयान्तरज्ञापकः संकेतेन शक्तिमान-भिधीयते तथा लिपिचिह्नं वर्णस्य शब्दोऽप्यर्थस्य । व्याप्तिज्ञानबलेन ज्ञापकं लिङ्गमुच्यते यथा धूमोऽग्नेः । सादृश्येन ज्ञापिका प्रतिमेति प्रसिद्धा यथा चित्रं चित्रितार्थस्य । यथा कथञ्चित्स्वसंसृष्टविषयान्तरसंस्कारोद्बोधनत-स्तस्य स्मृत्यापादकत्वं मुख्यं व्यञ्जकत्वम्, यथाश्रुदर्शने शोकस्य । लिङ्गलिङ्गिभावस्योपयोगः शुष्कज्ञानस्थलेषु प्रायिकः, तज्जन्यज्ञानस्य सामान्यविषयकव्यावृत्यात्मकत्वात्, सादृश्यविधानस्य रूप-चित्र-नाट्येषु लक्ष्यते प्रयोगः । सर्वत्रैव काव्येषु संगीते चित्रादिषु च सङ्केतव्यञ्ज-कयोर्व्यापारः संलक्ष्यते ।

तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्वमिति यत्सादृश्यलक्षणं प्रसिद्धं तद्वास्तविकसादृश्यविषयम्, न तु प्रातिभासिकविषयम्, काव्यकलादिषु तु प्रातिभासिकं सादृश्यमेव प्रकृतं यथाप्रतिभासमेव तत्र विषयाणां निरूप्यत्वात् । न मुखचन्द्रयोः वास्तविकं सादृश्यं प्रतीतिविषययोरेव तु तयोः सादृश्यम् । प्रकृतविषयकचमत्कारिप्रतीतिविशेषालम्बनीभूतधर्मस्यैव विभूततरप्रकाशनार्थमप्रकृतस्य सादृश्यमुपस्थाप्यते । तथा हि प्रकृतस्य चन्द्रस्य शुभ्रकान्तिमप्रकृतेन राजहंसेन तुलयन् कविः स्वमनोबिम्ब-मेवाह्लादकं स्फुटीकरोति, न तु तेन चन्द्रस्य बृहदाकारस्य प्रकाशरहितस्य वस्तुवृत्तं निरूप्यते । भावालम्बनतयैव सादृश्यं काव्ये कलासु वोपयुज्यते । तथा च सादृश्यं व्यञ्जकानुगुणतयैव रचनाकृतोऽभीष्टम् ।

सङ्केता अपि यावत् तेषां यादृच्छिकत्वं पृथग्रूपता वा स्फुटीभवति तावद् अर्थान् परोक्षतयैव विभावयितुं क्षमाः । सङ्केतप्रत्ययार्थानां भेदे विलयमिवोपगते अभ्यस्तशब्दादिवत् काव्याद्यर्था भावनया साक्षात्कारिप्रत्य-यान्तर्गता भान्ति । चित्रप्रतिमादिषु मूर्ताकारसाहाय्येन अमूर्तमपि मूर्तवदु-पस्थाप्यते, विकल्पवाचकसङ्केतैस्तु मूर्तमपि व्यावृत्तिपुरस्सरयोजनाभिः अमूर्तवत्प्रत्याय्यते। तादृशनिरूपणेन विशेषणविशेष्यावगाहिना तात्त्विक-सम्बन्धनियमाः परिच्छिद्यन्ते तर्कोपयोगिनो व्यवहारोपयोगिनश्च । सामान्य-भाषात्मिका सङ्केव्यवस्थैव अनादिविकल्पवासितव्यवहारबुद्धेः पुरुषस्य मूलभूता सङ्केव्यवस्था यामाश्रित्य प्रवर्तन्ते शास्त्रीयाः परिभाषाः । रूपादिषु सादृश्यबोधनिबन्धना स्वरतालादिषु प्रत्यक्षरूपसहजा वा स्वाति-रिक्तप्रत्यायन-शक्तिः अव्यक्तार्थाभास एव विश्राम्यति । विशेषपरिच्छेदस्तु शब्दानुवेधेन तद्व्यापकविकल्पनेन च विना न सम्भवति । अतः शब्दशक्तिरेव सर्वसङ्केतानां मूलम्, भाषापुरस्सराश्च सर्वसङ्केतव्यवस्थाः ।

भाषां वस्तुचित्रात्मिकां निरूपयन्तः केचिद् आधुनिकास्तच्छक्तिमूलं रचनासादृश्यमेव प्रत्यपीपदन्[15] । प्रत्यक्षसंवेद्यं धर्मं नीलं नीलनाम्ना व्यपदिशन्ति नीलोऽयमिति तु धर्मरचनानुक्रियते नामरचनया । एवं पृथक् संवेद्येसु विशेषेषु तद्रचनासंघटितं विश्वमाविर्भवति तच्च भाषयाऽपि

नामकरणेन रचनानुकरणेन च चित्र्यते । नामगोचरः संवेद्यान्त्यविशेषो विशेषान्तरैः नियतसम्बन्धात्मकः ज्ञाननिरपेक्षः सङ्केतनिरपेक्षश्च कल्पितः । न त्वेतत्समञ्जसं भाति, न हि विशेषस्य नामकरणं शक्यम्, तस्यानावर्तितया दृष्टलुप्तत्वात् । नापि तत्सम्बन्धा यथादृष्टं निरूपणीयाः, सम्बन्धस्याप्रत्यक्षत्वात्* । न च पदार्थस्य विशेषणविशेष्यावगाहिज्ञान-गोचरसामान्यविशेषात्मकत्वं कल्पनीयम्, तादृशपदार्थस्य कल्पनापेक्षिसांवृत-विषयत्वात् । न हि शब्दगोचरो वस्तुनियतः, अवस्तुनोऽपि वाच्यत्वात् । शब्दस्य प्रत्ययमेवाभिदधतो विषयपरिच्छेदात्मकं प्रतिबिम्बपुरस्सरोऽपोह एवार्थो युज्यते[16] । एवं विकल्पव्यापारसहजः शब्दः । न हि विषये सनिर्धारणे दृश्यमाने वृद्धैः प्रथमतः कश्चित् सङ्केतः क्रियते घटोऽयमित्यादिः, न तत्र सङ्केतकरणस्य प्रथमोदयः कल्पनीयः, तस्य सङ्केतव्यापारज्ञानपूर्वत्वात् । प्रत्यक्षविषयोऽप्रत्यक्षस्य विकल्पस्य ज्ञापक इति बुद्धिमन्तरेण सङ्केतो न कर्तुं शक्यः, बाह्यार्थस्य विकल्पनं विकल्पितार्थस्य च बहिः प्रकाशन- मित्युभयी एव सहजा प्रवृत्तिर्बुद्धेः । विमर्शात्मिका हि संविद् स्वात्मानमेव स्वातन्त्र्येण परिच्छिन्दती सृजत्यर्थात्मना । अर्थाश्च सविकल्पप्रतिबिम्बात्मानो येन सूत्रेण पुत्तलिका इव धृताः चैतन्यमेव तत् । तस्य च विषयनिर्धारणोपस्थापनप्रकाशनसाधनभूताः सङ्केताः प्रत्यक्ष-चिह्न-विग्रहाः । तथा हेलेनकैलेर्जात्यन्धवधिरा अलेखयत् स्वचरिताख्याने जलं स्पृशन्त्या स्पर्श्यमान-लिप्याकारांश्च अनुभवन्त्या मया तयोरुभयविधयोः स्पर्शविषययोः वाच्यवाचकसम्बन्धो बुद्ध इति । सङ्केतविधानं संविदः सहजशक्तिनिबन्धनम् इति चत्वारि वाक् इत्यादि श्रुतिसंमतेन परापश्यन्त्यादिवाग्भेदसिद्धान्तेनापि समर्थ्यते ।

**सङ्केतः कल्पनामूलः कल्पना शक्तिरात्मनः ।**
**परामर्शात्मिका चिद्धि सृजत्यात्मानमात्मना ॥ २६ ॥**

**रचनामाश्रितं रूपं रचनार्थगवेषिणी ।**
**चित्ताभिप्राय एवार्थः सङ्केतमनुवर्तते ॥ २७ ॥**

---

*. दिङ्नागाचार्या ऊचुः—'न सम्बन्ध इन्द्रियेण गृह्यते' इति ।

**पादटिप्पण्यः –**

1. तु. कान्ट, **पूर्व.** पृ. ५५ प्र.
2. तु. मम **मूल्यमीमांसा**, पृ. १९५-९६.
3. **रसगङ्गाधरः** (काव्यमाला), पृ. ५-६ : स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकसंसर्गेण चमत्कारत्ववत्वमेव वा काव्यत्वम् ।
4. तु. **अभिनवभारती**, रससूत्रव्याख्याप्रसङ्गे अभिनवगुप्तोक्तम्–
ऊर्ध्वोर्ध्वमारुह्य यदर्थतत्त्वं धीः पश्यति श्रान्तिमवेदयन्ती ।
फलं तदाद्यैः परिकल्पितानां विवेकसोपानपरम्पराणाम् ॥
5. तु. हेगेल **एन्त्सिल्कोपेदी** (हाम्बुर्ग, १९६९), पृ. १०२-३ : विरोधग्रस्तप्रत्ययानामतिक्रमणं **डायलेक्टिक** इत्यस्य लक्षणम् ।
6. हेगेलेन सौन्दर्यतत्त्वविमर्शः कलेतिहासश्च समानेनैव क्रमेण व्यधायि । शिल्पिकृतेष्वैन्द्रियेषु रूपेषु भौतिकमुपादानं प्रत्ययश्च बौद्धः परस्परमानुरूप्यं भजतः, उदा. द्र. हेगेल, **पूर्व.** पृ. ४४२. इतिहासे विवर्तमानाः सौन्दर्यप्रत्ययाः संक्षेपेण त्रयो युगविभाजनं त्रिधा सम्पादयन्ति, तद् यथा प्रतीकप्राधान्यं यत्र प्रत्ययव्यक्तौ रूपमशक्तम्, भारतीयशिल्पमस्य निदर्शनम् । प्रत्यययोः सामरस्य यथा प्राचीनयवनशिल्पे; प्रत्ययस्य प्राधान्यं यथा आधुनिककलायाम् । – द्र. हेगेल, **ईस्थैटिक** (बलिर्न,. १९५५), पृ. ३१०, ४१८, ४९५.
7. **अभिधर्मकोशभाष्यम्** (पटना, १९७५), पृ. ६.
8. द्र. पी. एस. शास्त्री, **ए. बी. ओ. आर. आई.**, ३२, पृ. ८४-१२१.
9. सङ्केतशब्दोऽत्र सङ्केतेन (=इच्छया, समयेन) परोक्षार्थसूचके प्रत्यक्षचिह्ने प्रयुक्तः, यथा लिपिः शब्दं संकेतयति, शब्दोऽर्थम् । वैदिकरूपप्रतीकशब्दावप्यत्र प्रायेण सदृशौ ।
10. **अभिनवभारत्यां** प्रथमेऽध्याये
11. उदा. कासिरेर, **फिलौसफी ऑव सिम्बलिक फोर्म्स** (आंग्ल अनु.)
12. द्र. मम लेखौ - "द अर्ली बुधिस्ट नोशन ऑव ब्यूटी" (**राजस्थान यूनिवर्सिटी स्टडीज**), "रिफ्लैक्शन्स ऑन बुधिस्ट ईस्थैटिक्स" (**जर्नल ऑव बुधिस्ट स्टडीज**, दिल्ली विश्वविद्यालय).
13. द्र. वसुबन्धु, **विंशतिका**, **त्रिंशिका** च, तु. मम **ऐस्पेक्ट्स ऑव महायान** (सारनाथ-भोट-संस्थानतः प्रकाशितम्).
14. तु. **ध्वन्यालोकः** (बनारसः, १९४०), सम्पादकीय पृ. ९-१०.
15. अस्य मतस्य सुप्रसिद्धं प्रतिपादनं विटगैन्स्टाइन इत्याख्येन दार्शनिकप्रवरेण **ट्रैक्टेटस लौगिकोफिलसोफिकस** (अनु.) इत्याख्ये ग्रन्थे व्यधायीति विदितं विदुषाम् । पश्चात् तेनैव मतान्तरं प्रकाशितम्, द्र. **फिलसौफिकल इन्वैस्टिगेशन्स** (अनु.).
16. द्र. मयानूदिता व्याख्याता च **अपोहसिद्धिः** (सारनाथ-भोट-विद्या-संस्थानतः प्रकाशिता)

●

# रसतत्त्वविमर्शः

**शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः ।**
**वेदेष्वपि स नानार्थो देवोपासनसङ्गतः ॥ १ ॥**

**रसयुक्तिः समाख्याता सोमसामविधानयोः ।**
**दिव्या प्रीतिः स आनन्दो भाव्यो व्यङ्ग्यश्च संविदः ॥ २ ॥**

**वाक्प्राणमिथुनीभावः स्वच्छन्दः सामरस्यतः ।**
**शिल्पमात्मकृतिस्तस्मात् सृज्यते स्वेन ज्योतिषा ॥ ३ ॥**

सुविदिता रसशब्दस्य अनेकार्थता, तथा हि-

**"शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः"** इत्यमरः । (३.३.२२७)

धातुपाठेऽपि रस्धातुः आस्वादनार्थः स्नेहनार्थश्च । प्राचीनतमेषु वैदिकप्रयोगेषु अन्तःसारभूतो द्रवो रसेनाभिधीयमानो लक्ष्यते । यथा– "तमासोमे रसमादधुः", "यो वः अन्तरिक्षमापृणाद्रसेन," "यो नो रसं दिक्षति पित्वो अग्ने यो अश्वानां यो गवां, यस्तनूनाम्" । एवं रसशब्दप्रयोगः सारे मधुरे शुभे अमृते च उपलभ्यते । उपनिषत्सु रसः सारं तत्त्वमाचष्टे यथा–"एषा भूतानां पृथ्वी रसः । पृथिव्या आपो रसः । अपाम् ओषधयो रसः । ओषधीनां पुरुषो रसः, पुरुषस्य वाग्रसो वाच ऋग्रसः, ऋचः साम रसः , साम्न उद्गीथो रसः, स एष रसानां रसतमः, परमः परार्धोऽष्टमोऽयमुद्गीथः" । (छा. १.१.२-३)

भगवत्पादा अत्र रसं मूलार्थकं श्रेष्ठतत्त्वार्थकं च व्याचख्युः । एवं च सर्वभूतानि पृथ्वीमूलानि पृथ्वी जले प्रतिष्ठिता ओषधयो जलमूलाः । वाक्पुरुषस्य श्रेष्ठं तत्त्वं वाच एव सारभूता ऋचः सामानि च । साम्नस्तत्त्वम् उद्गीथः प्रणव इति यावत् । पुरुषोऽत्र जगतो मूलतत्त्वम् । तस्य च सृष्टिसमर्था ज्ञानमयी वागेव परमा शक्तिः । यथेश्वरो वेदेभ्यो जगन्निर्ममे तथैव पुरुषोऽपि वाचा मनोमयान् अर्थान् सृजति । एवं वाक्

च प्राणश्च युगनद्धौ ज्ञानशक्ती इव । "कतमा कतमर्क् कतमत्साम कतमः कतमउद्गीथ इति विमृष्टं भवति । वागेवर्क् प्राणः, साम, ओमित्येतदक्षरम् उद्गीथः । तद् वा एतन्मिथुनं यद् वाक्च प्राणश्च ऋक् च सांम च" ।

रस-शब्दस्य इमे प्रयोगाः सोमोपासनया सामोपासनेन च सम्बद्धाः । तथा च "ओमित्युद्गायतीति लिङ्गाच्च सोमयाग इति गम्यते" । सोमरसः हर्षप्रदः आह्लादहेतुश्च विदितः । देवानां मुख्याहाररूपश्च न बाह्यद्रव्य-मात्रं सोमोऽवकल्पनीयः । "हविर्वै यजमान" इति वचनाद् यजमानस्य आत्मनिवेदनात्मको भाव एव सोमस्य मुख्यार्थ इति वेदितव्यम् । इत्थं सोमरसस्य तात्पर्यं भक्तिरसे एव ग्राह्यम् । न च "हविर्वै यजमान" इति अर्थवाद इति वक्तव्यम् । अन्तर्यागे भावनात्मके द्रव्यात्मकस्य हविषः अग्राह्यत्वात् । अन्तर्याग एव च बाह्ययागस्य तात्पर्यग्रहणौचित्यात्, न हि देवा विग्रहवन्तो भौतिकानि द्रव्याणि मनुष्यवत् गृह्णन्तो दृष्टाः । ते पुरुषसाक्षिभूतास्तद्भावेनैव अन्तर्मुखेन 'तृप्यन्ति' । एवं भगवता चोक्तम्—

"श्रेयान् द्रव्यमयाद्यज्ञाद् ज्ञानयज्ञः परंतप" इति, अतः सोमोपासनं स्वात्मनिवेदनात्मकभावेन साक्षिचैतन्यात्मकदेवस्य तर्पणम् । अनेन च सोमोपासनेन सम्बद्धं सामोपासनं तच्च नादोपासनमेव । नादमूलभूतः प्रणव एव परमात्मप्रतीकतया प्रस्तुतः । उद्गायतश्च स्फुरच्चैतन्यात्मकः प्राणः अभिव्यक्तिरूपा च छन्दोमयी वाक् मिथुनीभवतः । छन्दोमय्या वाचा युक्तः प्राण एव रसः । "एतम् एवाङ्गिरसं मन्यन्तेऽङ्गानां यद् रसः ।" (छा. १।२.१०) "सोऽङ्गानां प्राणः सन् रसः तेनासावाङ्गिरसः ।" रसोऽयम् अमृतरूपो यद्दर्शनेन देवाः तृप्यन्ति । "त एतदेव रूपम् अभिसंविशन्ति । एतस्माद् रूपाद् उद्यन्ति " ।

एवम् उपासनाकाण्डे रस-रहस्यं वाक्प्राणमिथुनेन प्रणवेन च सङ्केतितम् । ज्ञानकाण्डे स्पष्टमेव रसस्य आत्मरूपत्वं प्रतिपादितम् ।

"असद् वा इदमग्र आसीत् । ततो वै सदजायत । तदात्मानं स्वयमकुरुत । तस्मात्तत्सुकृतम् उच्यत इति । यद् वै सुकृतं रसो वै सः ।" "रसं ह्येवायं लब्ध्वानन्दीभवति । कोह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयति यदा ह्येवैष एतस्मिन् अदृश्ये

अनात्म्ये अनिरुक्ते, अनिलयने अभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति ।" (तै. २.७) अत्र रसस्य आनन्दार्थता आनन्दस्य च आत्मस्वरूपता स्फुटमिभहिता । अयं स्वरूपानन्दो विषयानन्दात् संवेदनरूपात् सात्त्विकाद् औपाधिकाद्वा विवेचयितव्यः । तथा चानन्दस्य मीमांसाऽपि तत्रैव सुविदिता यत्र अकामहतस्य श्रोत्रियस्यानन्दः सर्वविषयानन्देभ्यः श्रेष्ठोऽभिहितः । "किमानन्दो विषयविषयिसम्बन्धजनितो लौकिकानन्दवदाहोस्वित्स्वाभाविक इति.....तत्र लौकिक आनन्दो बाह्याध्यात्मिकसाधनसम्पत्तिनिमित्त उत्कृष्टः" । आपामरं प्रसिद्धोऽयं लौकिकानन्दो विषयसंवेदनात्मकः, ब्रह्मानन्दस्तु ततो भिन्नो व्यावृत्तविषयबुद्धिगम्यः । तथापि "लौकिकोऽप्यानन्दो ब्रह्मानन्दस्यैव मात्रा" अविद्याच्छन्नजनस्य कर्मपरवशस्य । पुनश्च "स एवाविद्याकामकर्मापकर्षेण मनुष्यगन्धर्वाद्युत्तरोत्तरभूमिष्वकामहतविद्वच्छ्रोत्रियप्रत्यक्षो विभाव्यते शतगुणोत्तरोत्तरोत्कर्षेण यावद्धिरण्यगर्भस्य ब्रह्मण आनन्द इति । निरस्ते त्वविद्याकृते विषयविषयिविभागे विद्यया स्वाभाविकः परिपूर्ण एक आनन्दोऽद्वैतो भवति" ।

ब्रह्मस्वरूपाभिन्नश्चानन्दः सहजो निष्कामो निर्विषयः, स एव परमार्थतो रसः । नायं विषयास्वादः प्रत्युतात्मस्वभाव एव, न विकारिसंवेदनात्मको, निर्विकारचैतन्याभिन्नस्तु । आनन्दस्वरूपोऽप्यात्मा विषयाध्यासवशेन सुखदुःखमोहैरभिभूयते निरानन्द इवान्वेषते बाह्यविषयेषु रसम् । यत्र कुत्राप्यात्मनश्छायां गृह्णाति प्रियत्वमस्याभासते । "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवति" । "आत्मप्रीतिसाधनत्वाद्गौणी अन्यत्र प्रीतिरात्मन्येव मुख्या" । विषयप्रीतिः सर्वविदिता मलिनः प्रतिबिम्ब इव रसस्य, सत्त्वशुद्ध्या विमलतरोऽयं जायते प्रतिबिम्बो यथा निष्कामस्य श्रोत्रियस्य । बिम्बस्तु विषयपरावृत्तं चैतन्यमेव स्वरूपस्थम् । विषयसुखनिर्विषयानन्दयोर्मध्यवर्तिनी शुद्धविषयबुद्धिः । तदीयेषु सात्त्विकोपाधिषु ज्योतिर्नादो ध्यानादिवृत्तिश्च चेतसो मुख्याः । अतश्च रूपशब्दादिभावनोपकृतेऽन्तर्मुखचैतन्ये रसप्रतीतिर्व्यज्यते ।

प्रतीतिश्च सा विशदादर्शायमानेषु विषयेषु तदनुभवाकारसंवलितः सहजानन्दप्रतिबिम्बः ।

**कोऽयं नाट्यरसस्तावन् मनोरञ्जनमेव किम् ।**
**आस्वाद्यो वा सहृदयैरुत्कर्षः कश्चिदिष्यते ॥ ४ ॥**

नानाकलाः समवहिता नाट्यशास्त्रे । तासां चान्वयसूत्रं रस एव लक्षयितुं शक्यः । तथा चोक्तम्–

**"न हि रसादृते कश्चिदर्थः प्रवर्तते"** । इति ।

अभिनवगुप्तपादाश्चाहुः– "रस एव नाट्य"मिति । यद्यदपि नाट्ये प्रस्तूयते तत् सर्वस्य प्रयोजनं रसपरिपाक एव । आंग्लदेशे विश्रुतकीर्तयः निकलइत्याख्याः आधुनिका आचार्याः रसं नाट्यस्य समग्रप्रभावात् अनन्यं प्रतिपादयामासुः । यश्च नानाव्यञ्जनसमायोगात् रसोत्पत्तेः दृष्टान्तः प्रत्युपस्थापितो भरतेन सोपि रसं नाट्यव्यापिनं आस्वादमेव निरूपयति । सर्वाण्येव नाट्याङ्गानि सङ्गतानि रसनिष्पत्त्यर्थमेव प्रयुज्यन्ते । कालान्तरे काव्यमात्रस्य संगीतशिल्पयोश्च सारं रसे प्रतिष्ठितम् इति प्रायेण प्रतिपन्नं विद्वद्भिः ।

सुविदितमेतत् साहित्ये कलासु च विलक्षणः कश्चिद् उपलभ्यते आस्वाद इति । कोऽयम् आस्वाद इति तु भूयसा विप्रतिपत्तिविषयः । केचिद् आस्वाद्यतां काव्यादीनां तेषां मनोरंञ्जकतामेवाहुः । तथा च दृश्यते नाट्यसमारोहे आबालगोपालम् अनुरक्तचित्ता जनाः ; किन्तु यत्र तेऽनुरज्यन्ते न तत्र अभिज्ञास्तथैव सादराः । काव्यादिष्वपि प्राकृतजनमनःप्रसादनं न सूचयति काव्योत्कर्षम् । तथा च संगीतेऽपि लोकगीतादीनि रञ्जयन्ति मनांसि न च तत्र अभिनिविशन्ते आचार्याः । एवं काव्यादिषु सर्वत्रैव रञ्जकतायाः विद्यमानत्वेऽपि न तावता लक्ष्योत्कर्षः सिद्ध्यति । अथवा रञ्जकतेत्यत्र सहृदय-रञ्जकत्वम् इति वक्तव्यम् । कदाचिद् यत्प्राकृतजनरञ्जकं न तद् विपश्चितः सहृदयस्य । अन्यथापि

सहृदयमनोरञ्जनं दुर्लभमेव । आएरिचर्डस् इत्याख्यः प्रसिद्धो विद्वान् अलिखत्–"एकदा प्रतिश्याय-ज्वरादिग्रस्तः "एला वीलर विलकाक्स" इत्याख्यया कवयित्र्या रचितानि पद्यानि पठन् भावविह्वलोऽभूवम्, ततः पश्चात् स्वस्थो भूत्वा अनुतापमन्वभवम्, तादृशेषु भावाभासलक्षितेषु पदेषु यद्रक्तिर्मया लब्धेति"*। ततः पश्चात्तेन स्वाध्ययनवेलायां नियमोऽयं कृतो नास्वस्थेन मनसा काव्यं परिशीलयितव्यमिति । अस्माद् वृत्तान्ताद् गम्यते नहि यस्य कस्यचिद् यथा कथञ्चिद् वा रक्तिप्रतीतिः काव्यादिषु तदुत्कर्ष-हेतुर्मन्तव्यः । अभिनवगुप्तपादा अप्याहुः हासरुदितप्रधानासु रचनासु स्त्रियो बालाश्च भूयसा रक्तिमनुभवन्तीति ।

यद्यप्येवं प्राकृतशिष्टानां रुचिभेदः स्पष्टमेव लक्ष्यः, तथा च काव्यादिप्रभेदा अपि विविक्ता लक्ष्याः । तथापि केचिदाहुः–उत्कृष्टे काव्ये नाट्ये च प्राकृतजनरञ्जनं शिष्टरञ्जनञ्चोभयमप्यपेक्ष्यते । तथा प्रसिद्धानां प्राचीनयवननाट्यकृतां प्रयोगाः सुबहुलजनसमाजेन प्रेक्षिताः प्रशंसिताश्च । एवमेव शेक्सपियर-कृता अपि प्रयोगा विपुलसामाजिकपरिषदा प्रेक्ष्य शंसिताः । पुनश्च बहवो जनवादिनः परीक्षका आधुनिकाः सामान्यजनमनोरंञ्जनं नाट्यप्रयोजनेषु प्रथमतया गणयन्ति । दुर्बोधाश्च प्रयोगाः अनर्घराघवादिसदृशाः सदोषा एव तैः मन्यन्ते । काव्येऽपि अयमेव विरोधो लक्ष्यते सुचिराभ्यस्तमाघनैषधादिकाव्याः सहृदया अश्वघोषादि-काव्येषु न रज्यन्ते । पाश्चात्त्याः संस्कृतज्ञा माघनैषधादीनि काव्यानि न स्वादयन्ति ।

उत्कर्षहेतुत्वेन अभिमते रसे न तस्यार्थो यथाकथञ्चिद्मनोरञ्जनमेव । मनोरञ्जनमपि क्वचिच्चमत्कारमात्रम् आलम्बते क्वचिद् रसम् । यथा वंशमारोहन् नटः सचमत्कारं प्रेक्ष्यते न च तत्र रसः कश्चित् । यथा वा क्रीडाप्रदर्शनेषु लक्ष्यत एव मनोरञ्जकः चमत्कारः, न च तेन कश्चिद् रसास्वादः । आस्वादविशेषभूतो रसः मनोरञ्जनसङ्गतोऽपि विपश्चितः

---

*. आ. ३०. ए. रिचर्ड्स, **प्रिन्सिपल्स ऑव लिटररी क्रिटिसिज़्म.**

सहृदयस्य न भूयसा सामान्यजनगोचरमनोरञ्जनाभिन्नः । कथञ्च रसो लक्षयितव्यः, किमस्यावच्छेदकं कास्य पुरुषार्थयोगिता किमस्योपादेयत्वम्, कथं चेदं काव्यादिविवेचने प्रज्ञापकं लक्षणम् उत्कर्षतारतम्यस्य, किमयं सनातनः प्राचीनयुगमात्रक्षपितजीवितो वा इत्यादयः प्रश्ना विचार्यत्वेन प्रत्यवतिष्ठन्ते ।

**मुनिना नाट्यसन्दर्भे रसतत्त्वं निरुपितम् ।**
**दृष्टान्तीकृत्य लोकं तन् नाट्यं बोधयते सतः ॥ ५ ॥**

**प्रबोधनं भवत्यत्र स्वरूपोन्मीलनात्स्फुटम् ।**
**स्थगितायामहंबुद्धौ भावे रूपान्तरीकृते ॥ ६ ॥**

भरतेन षष्ठसप्तमयोरध्याययोर्नाट्यशास्त्रस्य रसो निरूपितः । प्रथमत एव प्रश्नस्तत्र लक्ष्यते–

**"ये रसा इति पठ्यन्ते नाट्ये नाट्यविचक्षणैः ।**
**रसत्वं केन वै तेषाम् एतद् आख्यातुमर्हसि" ॥**
**भावाश्चैव कथं प्रोक्ताः किं वा ते भावयन्त्यपि ।**
**सङ्ग्रहं कारिकां चैव निरुक्तं चैव तत्त्वतः" ॥**

(६.२.३)

एतत् प्रश्नानन्तरं भरतो मुनिः रसभावविकल्पनं वाक्यं प्रत्युवाच । रसभावादिसंग्रहं च त्रयोदशविधम् अभिदधौ । तदित्थम्–

**रसा भावा ह्यभिनया धर्मी वृत्तिप्रवृत्तयः ।**
**सिद्धिस्वरास्तथातोद्यं गानं रङ्गश्च संग्रहः ॥**

**उपचारस्तथा विप्रा मण्डपश्चेति सर्वशः ।**
**त्रयोदशविधोऽप्येष ह्यादिष्टो नाट्यसंग्रहः ॥**

एवं नाट्यं बहूनामवयवभूतानां धर्माणां नाट्यत्वविधायकानां वा तत्त्वानां संग्रहत्वेन विवक्षितम् । तानि तत्त्वानि अत्र संगृहीतानि । तेषु रसः

प्रथमः, अष्टविधश्च स्मृतः । ननु नाट्यपदार्थोद्देशवचनं संग्रहवाक्यम् । तत्र बहुवचन एव रसशब्दस्य प्रयोगः किमर्थं कृतः । यथा-

**शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।**
**वीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्यरसाः स्मृताः ॥**
**एते अष्टौ रसाः प्रोक्ता द्रुहिणेन महात्मना" । इति ।**

सर्व एवैते रसभावाभिनयादयः स्वभेदेन नाट्यप्रयोगं भेदयन्ति नानाविधानि नाट्यानि प्रेक्षमाणाः सहृदया नाट्यं लोकाद् नाट्यान्तरात् च यैर्विशेषैः पृथक् पृथक् लक्षयन्ति त एव विशेषा नाट्यसंग्रहवचने संगृहीताः पदार्थाः । एकतः .रसभावादयो नाट्यं लोकाद् विशेषयन्ति अपरतश्च तद्गतप्रभेदा नाट्यप्रभेदान् परस्परं विशेषयन्ति । एवं लोकाद् नाट्यवैलक्षण्यं विदधानो रस एकवचने प्रयोक्तव्योऽपि नाट्यप्रभेदान् परस्परं व्यावर्तयन् स्वयमपि बहुत्वं प्रतिपद्यमानो बहुवचने प्रयोगमर्हति । सामाजिकैः नाट्याद् मुख्यतया ग्राह्योऽर्थ एव रसः । अतस्तस्य नाट्यपदार्थसंग्रहे शीर्षस्थानीयत्वम् । नाट्यप्रेक्षणार्थं जिगमिषवस्ततो निवर्तमाना वा सामाजिकाश्चेत् पृच्छ्यन्ते कोऽर्थो भवतामिति, रसोपलब्धिरित्येव प्रतिवचनं स्यात् । रसार्थमेव हि नाट्यं प्रेक्ष्यते । अतश्चोक्तम्–

"न हि रसादृते कश्चिदर्थः प्रवर्तत इति" । यदपि च कविकुलगुरुणा नाट्यस्याष्टरसाश्रयत्वमभिहितं तत्रापि आश्रयत्वं कविनटसामाजिक-चिन्तानुगतभावनाविषयत्वमेव । कविप्रतिभाविषय एव नटव्यापारपुरस्कृतैः प्रत्यक्षरूपैः सङ्केतैरवगम्यते सामाजिकैः । नाट्यसन्दर्शितान् नानार्थान् आलोचयन् सामाजिकः प्रयोगक्रमोपचितां कामप्यवस्थां चेतसोऽनुभवति यत्र विलक्षणः स्फुरत्यास्वादः सविषयः । नायमास्वादो निर्विकल्पाव्यक्त-विषयो रसनाकायेन्द्रियविकारमात्रसंवेदनोपमो नापि स्वगतसुखस्य मानसप्रत्यक्षोपमः प्रत्युत स्फुटविविक्तविषयालम्बनः । स च विमृश्यत्वेऽपि

स्फुटास्वाद्योऽर्थो व्याप्नोति नाट्यकलेवरं प्राण इव देहमभिप्राय इव च वचनम् ।

**बह्वर्थसमवायेऽपि नाट्ये रसः प्रधानताम् ।**
**भजति द्रव्यसंस्कारो यथा भक्तविदां मते ॥ ७ ॥**

**चित्तमेव भवेन्मूलद्रव्यं भावस्तु संस्कृतिः ।**
**लोकार्थकृतसंकोचापाये संविद्रसोदयः ॥ ८ ॥**

मुख्यत्वात् प्रथमोद्दिष्टस्य रसपदार्थस्य परिवारोपकरणभूताश्चान्ये पदार्थाः संग्रहवचने । रसप्रतीतेरन्तरङ्गतयैव भावास्तदनन्तरमुक्ताः, भावप्रत्यायकत्वाद् अभिनया अभीष्टाः, तत्र लोकसादृश्यस्यांशतो विद्यमानत्वाद् धर्मी, नाट्यार्थप्रकाशकत्वाद् वृत्तिप्रवृत्तयः, प्रयोगफलरूपत्वात् सिद्धिः, सामाजिक- चित्तानुकूलत्वसंपादनार्थत्वात् स्वरातोद्यगानानि रंगोपचारमण्डपाश्च नाट्यप्रयोगसाधनत्वाद् उत्तरोत्तरं क्रमेण अभिहिताः । एवं च संग्रहवचनं साध्यसाधनक्रमेण रसमेव मुख्यतया निरूपयति, नाट्यगताशेषार्थप्रवृत्तेः सहृदयहृदयसंवादिन्या रससम्बन्धाविनाभूतत्वात् ।

रससूत्रं भरतस्य सुप्रसिद्धं "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति" । स्मर्तव्यं चात्र भरतोक्तं "विभाव इति कस्मात्, उच्यते–विभावो विज्ञानार्थः, विभावः कारणं निमित्तं हेतुरिति पर्यायाः " । "अथानुभाव इति कस्मादुच्यते ? यदयमनुभावयति वागसङ्गसत्त्वकृतमभिनयमिति ।" एवं भावाख्यचित्तवृत्त्युद्भवहेतुर्विषयो विभावः, तत्कार्यभूतोऽनुभावस्तत्परिपोषको यथा कटाक्षभुजक्षेपादयो रतेः । व्यभिचारिणस्तु स्थाय्यनुगुणा भावा अनित्या हर्षादयः । एवं विभावानुभावव्यभिचारिभिः कारणकार्यसहकारिभिः संयुक्तः स्थायी भावो रसरूपो निष्पद्यत इति सूत्रार्थः सम्पद्यते । तथा च दशरूपके–"रसावस्थः परं भावः स्थायितां प्रतिपद्यते" इति । मम्मटकृतं च निरूपणं मुनिमतस्यार्हत्युद्धरणम् सुस्पष्टवचनत्वात्–

**"कारणान्यथ कार्याणि सहकारीणि यानि च ।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥**

**विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः ।**
**व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः" ॥** इति ।

दृष्टान्तोऽपि मुनिना सुविदित उपन्यस्तः—"यथा हि नानाव्यञ्जनौषधिद्रव्यसंयोगाद्रसनिष्पत्तिर्भवति; यथा हि गुडादिभिर्द्रव्यैर्व्यञ्जनैरौषधिभिश्च षाडवादयो रसा निवर्तन्ते ( ? निर्वर्त्यन्ते), तथा नानाभावोपगता अपि स्थायिनो भावा रसत्वमाप्नुवन्तीति । अत्राह—रस इति कः पदार्थः । उच्यते । आस्वाद्यत्वात् । कथमास्वद्यते रसः ? यथा हि नानाव्यञ्जनसंस्कृतमन्नं भुञ्जाना रसानास्वादयन्ति सुमनसः पुरुषा हर्षादींश्चाधिगच्छन्ति तथा नानाभावाभिनयव्यञ्जितान् वागङ्गसत्त्वोपेतान् स्थायिभावान् आस्वादयन्ति सुमनसः प्रेक्षकाः, हर्षादींश्चाधिगच्छन्ति तस्मान्नाट्यरसा इत्यभिव्याख्याताः " । आनुवंश्यौ श्लोकौ च तत्र उदाहृतौ, यथा—

**"यथा बहुद्रव्ययुतैर्व्यञ्जनैर्बहुभिर्युतम् ।**
**आस्वादयन्ति भुञ्जाना भक्तं भक्तविदो जनाः ।**
**भावाभिनयसम्बद्धान्स्थायिभावांस्तथा बुधाः ।**
**आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृताः" ॥** इति ।

अविवेक्येव पामरो भक्तं भुङ्क्ते क्षुधितः सतृणाभ्यवहारन्यायेन, लौकिकाअपि कर्मपरवशा भोगान् भुञ्जते यथाप्राप्तम् । सुखदुःखाप्तिस्ततो भवति सामान्यतः सर्वविदिता, न च रसाप्तिः । लोके केचिदेव सुमनसः तत्कालोपेक्षितकर्मव्यासङ्गाः समुदीर्णविमलसत्त्ववृत्तयो दृश्यरूपाणि तत्तच्चरितानि वा चित्तवृत्त्यभिव्यक्तिकराणि स्वयमनासक्ता इव प्रेक्षन्ते । विकचकुसुमेषु हासं शितिशिलासु निश्चलतां कर्मिषूत्साहं स्त्रीषु माधुर्यं बालेषु निश्छलतां वृद्धेषु गौरवं च पश्यतां तेषां लोको नाट्यायते । तैरेव सुमनोभिः अभ्रच्छन्नेऽह्नीव कर्मभोगान्धकारिते लोकेऽकस्मादादर्शितनभोनीलिम्नीवास्वाद्यतेऽलौकिको रसः । प्राकृतानां लोकव्यवहारिणां निश्चेतनबाह्यार्थप्रतीतिकठिनचेतसां स्वभोगाभिभूतबुद्धीनां तु तृष्णायासमसुखदुःखद्वन्द्वबन्धनमेवासक्त्युद्वेगकरं सततम् । बाह्यार्थेषु साध्यसाधन-

त्वबुद्धिः सुखदुःखयोश्च स्वभोगत्वबुद्धिस्तेषां बाधते रसप्रतीतिं सौन्दर्यप्रतीतिं च । भोगभक्ता एव ते, न रसभक्ताः । या च रसप्रतीतिः विशिष्टानामेव शिष्टानां कविशिल्पिभगवद्भक्तादीनां लोकेऽपि नासकृदुपजायते या वा अन्येषामपि विशिष्टावस्थासु पूर्वरागचिरविरह-परदुःखदर्शनादिषूपजायते, सैव विलक्षणास्वादभावपरामर्शप्रधाना प्रतीतिः नाट्ये सहृदयसामाजिकमात्रलक्ष्या । अत एवोक्तं भरतेन यथा भक्तविदो जना व्यञ्जन-संस्कृतं भक्तमास्वादयन्ति तथैव बुधा मनसा अभिनयव्यक्तान् स्थायिभावान् आस्वादयन्ति । नाट्योपनीतभावपरामर्शलब्धास्वाद एव नाट्यरसः ।

ननु व्यञ्जनैर्भक्ते स्वगतास्वादा योज्यन्ते न च अभिनयो भावे किमपि योजयितुं शक्नोति स्वयमेवानुकृतिरूपत्वात्, कथं च ततो भावे योज्य आस्वाद इति चेत् । व्यङ्ग्यत्वमेव भावे योज्यते येन सुस्फुटप्रतीतियोग्यो भवति स्वभोग्यत्वाभावेऽपि । अभिनयादिव्यञ्जकानांमहिमाऽयमेव यदन्तः परामृश्यानपि भावान् जनकहेत्वभावेऽपिते प्रत्यक्षवद् उपस्थापयन्ति । नाट्ये न लोकवद् जन्योऽपि तु व्यङ्ग्यो भावः, स नाट्यार्थालम्बनो मनसास्वाद्यो रसत्वं प्रतिपद्यते । तथा व्यङ्ग्यत्वात् कल्पितालम्बनत्वाद् आस्वादसारत्वात् चास्य वैलक्षण्यम् ।

ननु दृष्टान्ते लौकिकानेवार्थान् नाट्योपस्थापितार्थसंयोजनेन भक्तमिव व्यञ्जनसंस्कारेण यत् सरसान् साधयति, तत् तस्य रसस्य मूलमन्वेष्टव्यम् । भक्त इव लौकिकार्थेषु संस्कारद्रव्य इवाभिनये वेति चेत्, न, दृष्टान्तस्य दार्ष्टान्तिकेन सर्वथा साम्यं क्वचिदिष्यत इति स्मर्तव्यम् । द्वयोरप्यत्रा-स्वादोऽपूर्वोऽपि मूलद्रव्यसंस्कारोभयनिष्ठः, दार्ष्टान्तिके तु द्रव्यं स्थायिभाव एव, सस्कारकोऽभिनय आङ्गिकादिभेदभिन्नो विभावानुभावव्यभिचारिव्य-ञ्जकः, संस्कारोऽपि वासनाया व्यञ्जकद्वारेण मानससाक्षात्कारविषयत्व-सम्पादनम् ।

एवं रससूत्रस्य मुन्यभिप्रेतोऽर्थस्तदीयदृष्टान्तेनैव स्फुटीभवति । तथापि बहुभिः प्राचीनाचार्यैरर्वाचीनाचार्यैरपि नानार्था अस्य प्रपञ्चिताः । लुप्तास्वपि बह्वीषु तासु रस-सूत्र-विवृतिषु कासाञ्चित् संक्षेपो

लभ्यतेऽभिनवभारत्यामभिनवगुप्तपादाचार्यविरचितायामिति विदितमेव[1] । विवृतिकारेषु विप्रतिपत्तिहेतुर्मुख्यतः संयोगनिष्पत्तिपदयोरर्थपरिच्छेदापेक्षा । संयोगः कस्य केन कथमिति वक्तव्यम् । विभावादयः स्थायिभावेन अव्यक्तेन कथं संयोज्याः, व्यक्तेन वा किमर्थमिति व्याख्यामपेक्षते । निष्पत्तिरपि किमुत्पत्तिरेव ज्ञानविषयत्वं वा, ज्ञानं च पुनः किं स्वरूपं किं प्रमाणकमिति च वक्तव्यम् । एवं त्रयः पक्षा मुख्यतया उद्भाविताः प्राचीनैः– उत्पत्तिपक्षोऽनुमितिपक्षो व्यक्तिपक्षश्चेति ।

**नाट्यसंदर्शनाज्जातो रसः प्रेक्षकचेतसि ।**
**अभिन्नो लौकिकाद् भावात् प्रतीतोपचितोऽपि सः ॥ ९ ॥**

उत्पत्तिपक्षं भट्टलोल्लटप्रभृतीनामभिवगुप्ता एवं व्याचख्युः, "विभावादिभिः संयोगोऽर्थात् स्थायिनः ततो रसनिष्पत्तिः, तत्र विभावाश्चित्तवृत्तेः स्थाय्यात्मिकाया उत्पत्तौ कारणम् । अनुभावाश्च न रसजन्या अत्र विवक्षिताः, तेषां रसकारणत्वेन गणनानर्हत्वात्; अपि तु भावानामेव येऽनुभावाः । व्यभिचारिणश्च चित्तवृत्त्यात्मकत्वाद् यद्यपि न सहभाविनः स्थायिना, तथापि वासनात्मतेह तस्य विवक्षिता । दृष्टान्तेऽपि व्यञ्जनमध्ये कस्यचिद् वासनात्मकता स्थायिवद् अन्यस्योद्भूतता व्यभिचारिवत् । तेन स्थाय्येव विभावानुभावादिभिरुपचितो रसः । स्थायी भावस्त्वनुपचितः । स चोभयोरपि अनुकार्येऽनुकर्तर्यपि चानुसन्धानबलादिति ।"

न केवलं भट्टलोल्लटप्रभृतीनामपि तु चिरन्तनानामपि मतमिदं दण्डिप्रभृतीनामित्यप्याहुरभिनवगुप्तपादाः । तथा चाचार्यदण्डी अभ्यधात्– "रतिः शृङ्गारतां गता रूपबाहुल्ययोगेनेति" । "इत्यारुह्य परां कोटिं कोपो रौद्रात्मतां गतः" इत्यादि च । मम्मटेनायं पक्ष एवम् उद्धृतः– "विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणैः रत्यादिको भावो जनितः, अनुभावैः कटाक्षभुजाक्षेपप्रभृतिभिः कार्यैः प्रतीतियोग्यः कृतः, व्यभिचारिभिर्निर्वेदादिभिः सहकारिभिरुपचितो मुख्यया वृत्त्या रामादाव-

नुकार्ये तद्रूपतानुसन्धानान्नर्तकेऽपि प्रतीयमानो रस इति भट्टलोल्लट-प्रभृतयः" । इति हिमचन्द्राचार्याणामप्युद्धरणं तुल्यमेव ।

अस्मिन् पक्षे वासनात्मानो भावाः सर्वेषां हृदि स्थिताः स्थायिपद-वाच्याः । ते च योग्यविषयोपलब्धौ पुरुषस्य जहत्यव्यक्ततां विज्ञायन्ते च । तद्विषयाश्च स्वविषयकबोधस्य लोके कारका अपि नाट्यार्पिता विज्ञापकत्वेन विभावा उच्यन्ते । विषयोद्बुद्धा भावा मनोवाक्कायेषु विक्रियां जनयन्ति बहिर्व्यक्तायां तस्यां परोऽपि भावमभिजानाति, नाट्यार्पितवागङ्गसत्त्वाकारैश्च तैर्मूलविक्रियासदृशैः अनुभाव्यते भावः, ते चानुभावा उच्यन्ते । उद्बुध्यमानाश्च भावा नानावस्था अनित्यैरवान्तरैर्भावैरुपचीयन्ते विच्छिन्नवदप्यविच्छिन्नाः । ते चावान्तरभावा व्यभिचारिणः सञ्चारिणो वोच्यन्ते । लोके च नाट्ये च समान एव व्यापारः । लोके दुष्यन्तादयः शकुन्तलाद्या दृष्ट्वा विबुद्धरतयः चेष्टाज्ञापितस्वस्वभावा नानामनोऽवस्था अनुभवन्तः शृङ्गाररसमास्वादयन्ति, आत्मानं तदभिन्नतया अनुसन्दधाना नटा अपि तथानुभवन्ति । सामाजिकविषये भट्टलोल्लटस्याभिमतमनुद्धृततया अज्ञातमपि शक्यमनुमातुम् । सामाजिकोऽपि रङ्गे नटाभिनयेन प्रत्यायितभावो रसमुपलभतेऽनुकार्यवदनुकर्तृवच्चेति । एवं प्रथमं रस उत्पद्यते, तत उपचितिं पुष्टिं च गच्छति, अन्ते प्रतीयते स्फुटम् । तथा च निष्पत्तिशब्दस्य सूत्रे उत्पत्त्युपचितिप्रतीतयस्त्रयोऽर्था इति निर्गलितार्थः ।

भावरसयोर्मौलिकोऽभेद एव, रसश्च मूलतो लौकिक एवेत्येतदभ्युपगमेऽपि लोकसिद्धं रसं रङ्गे प्रदर्शयन् नटः किं तमनुभवत्यपीति सन्देहविषयस्तिष्ठत्येव । यद्यपि भगवता पतञ्जलिनापि "रसिको नट" इति वदता भावस्यानुसन्धानरस्यता समर्थिता तथापि बहुभिः सुविख्यातैरभिनेतृभिराधुनिकैः सा प्रत्याख्यायते । पुनश्च सामाजिकस्य प्रत्यायितोऽपि भावस्तटस्थज्ञानविषयत्वात् कथं रसनीयतामारोक्ष्यतीति शङ्काऽशक्यपरिहारैव ।

भावः कथं रसतामेतीत्यत्र शङ्कुकाचार्याणां विदिता एवापत्तयो दुष्परिहरा इव । भावरसयोरभेदे किमर्थं मुनिना भावविवरणं द्विरुपात्तम्

अवस्थाद्वयं सूचयता । रसाभिन्ने भावे भावावस्थाभेदो रसभेदमपि सूचयेत्, दशावस्थः कामः शृङ्गारदशकं षडवस्थश्च हासो हास्यषट्कम् । न त्वेतन्मुनिमतेन समञ्जसम् ।

**इत्यत्र दृश्यते स्पष्टं सम्बन्धो नाट्यलोकयोः ।**
**असम्बन्धस्तयोस्तावत् सर्वथा लुप्यते पुनः ॥ १० ॥**

वस्तुतस्तु भट्टलोल्लटमतं प्रायिकलोकसम्मतमेवाभिप्रायं परिष्कृत्योपन्यंस्यति । रत्यादयो भावा लोकविदितास्तेषामेव काव्यनाट्यादिकृतप्रदर्शनं विलक्षणमास्वादं जनयतीत्यपि निर्विवादप्रायं भाति । लोके योग्यविषयसन्निधाने भावोत्पत्तिः, नाट्ये तदनुसन्धानबलात्तस्य रसात्मिका प्रतीतिरिति व्यापारद्वयमसन्दिग्धमपि भावरसयोः व्याख्यात्र न परितोषमावहति तत्त्वजिज्ञासूनाम् ।

नाट्योपस्थापितनानावस्थलोकचरितप्रेक्षणेन सामाजिको रसमनुभवन् किं रत्यादिकमनुभवता लोकेन तुलनीयः ? तयोरास्वादौ तद्विषयौ च तावदापाततस्तुल्यातुल्यौ प्रतिभातः । शाकुन्तलचरितं दुष्यन्तविदितं शाकुन्तलाख्यनाटकप्रेक्षकाणामपि च तद् विदितम् । सादृश्येऽपि तत्र भेदो व्यक्त एव । यद्दुष्यन्तशकुन्तलादीनां परोक्षं तदपि प्रेक्षकाणां प्रत्यक्षम्, यच्च तेषामपरोक्षसंविदितं स्वभोगतया तत् प्रेक्षकाणां दूरादिव अस्वपरविभेदेन आलोच्यते । न च क्वचित् सर्वथा लोकवैलक्षण्यं काव्यनाट्यविषययोरिति वाच्यं सर्वत्र कविकल्पनाया लोकस्मृतिनिबन्धनत्वाद् । अथवा समाने समानोपादाने वा विषये लोकनाट्ययोर्लक्ष्यं तत्र ज्ञानभिदामात्रमिति वक्तव्यम् । ननु विषयगतविशेष एव ज्ञानं विशेषयतीति चेन्न, सामाजिकचित्तस्य विषयाकारातिरिक्तसम्प्रयुक्तधर्मविशेषितत्वात् । न च लोकेऽपि भावविषयिणस्तथात्वमेव चैत्तसम्प्रयुक्तत्वादिति वाच्यम्, चैत्तेषु भेदात् । एवं नाट्यतत्त्वानां विषयविषयिरूपाणां लोकसादृश्येऽपि तद्रचनापूर्वैव तत्त्वान्यपि आगन्तुकास्तित्वविमोचनपरिशुद्धस्वरूपाकारमात्रनिर्भासीनि संगीततत्त्वानीव सुयोजितानि । जडकारित्रलक्षितवस्तुत्वाभावेऽप्यवितथपुरुषार्थस्वभावो नियतिभयाभावेऽपि

कर्मफलसम्बन्धप्रकाशको मायादर्पणप्रतिबिम्बित इव तत्र लोकाकारः सङ्केतायते रसबोधस्य ।

एवं भट्टलोल्लटमतेन नाट्यविषयस्य लोकसादृश्यं नाट्यास्वादस्य च लौकिकभावास्वादसादृश्यं प्रतिपाद्यमानमपि न रसस्य सुखदुःखविलक्षणत्वमवस्तुविषयत्वेऽपि सत्पुरुषार्थप्रत्ययत्वं वा बोधयितुमलम् । न च रसस्य प्रबोधकत्वमप्रमाणमिति वाच्यम्, मुनिवचनस्याचार्यमतस्य विवेकिनां सहृदयानां च तत्र प्रवृत्तेः प्रमाणत्वेन विद्यमानत्वात् । मुनिर्हि नाट्यं पञ्चमं वेदमाचख्यौ हितोपदेशजननम्,

**"धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम् ।**
**लोकोपदेशजननं नाट्यमेतद् भविष्यति"** ॥ इत्यपि ।

नाट्यं लोकस्वभावोपदर्शकम्, वेदविद्येतिहासानामाख्यानपरिकल्पनम्, विश्रान्तिजननम्, विनोदकरणं चेति मुनिना प्रत्यपादि । लोकस्वभावमुपदर्शयद् नाट्यं वेदोपदिष्टं सनातनं धर्मतत्त्वं दृष्टान्तपरिकल्पनया प्रत्यक्षं प्रत्याययति, दुःखं श्रमं च विनोदयत् संविद्विश्रान्तिमर्पयतीति तात्पर्यम् । न ह्यत्र परस्परमसम्बद्धं स्वभावद्वयं नाट्यस्य उपवर्णितम्, प्रबोधात्मकं रञ्जनात्मकं च, उभयोरेवाखण्डरसप्रतीतौ संग्राह्यत्वात् । कथं च ज्ञानरक्त्योरेकत्र समावेशः स्यादित्यत्र मम्मटाचार्या आहुः–"सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे" इति । कान्तोपदेशो न रसं विहन्त्यपि तु तम् ऐन्द्रियमनोभूम्योरुत्तरं बुद्धिभूमावप्याकर्षति । ज्ञानासम्बद्धत्वे च काव्यनाट्ययोः परस्पराविरुद्धतयैव पुरुषार्थान् सेवमानाः कथं विवेकिनः सहृदयाःतत्र प्रवर्तेरन् । अभिनवगुप्तपादाचार्यैर्यद् हासरुदितप्रधानानां रूपकाणामप्रबुद्धजनसेव्यतया निन्दा व्यधायि, तदप्यत्र स्मृतिविषयमानेतव्यम् ।

लोकसादृश्येनैव नाट्यतत्त्वं व्याचक्षाणेन लौकिकीकुर्वता च रसं भट्टलोल्लटेन तद् वैलक्षण्यं न सम्यक् प्रकाशितम् । तथापि रसप्रतीतौ लोकः प्रत्यक्षायत इति तैः सम्यगेव प्राकाशि । कथं च लोको नाट्ये परिवर्त्यते कथं च सामाजिकदृष्टिर्लौकिकदृष्टेर्भिद्यत इति तैर्न स्वविचार-

विषयीकृत इति तद्विवरणेभ्यः प्रतिभाति । विवरणानि चात्यन्तसंक्षिप्तानि कदाचित्तादृशविचारं विद्यमानमप्युपेक्ष्य संगृहीतानि स्युः ।

आचार्यशङ्कुकेन भट्टलोल्लटमतमुत्पत्तिवादमुपचितिवादं प्रतीतिवादं च खण्डयता अनुमितिवादः प्रतिपादित इति विदितमेव विदुषाम् । कथमव्यक्तो भावो हेतुभिः संयुज्येत उत्पद्येत च ततः, अव्यक्तस्यानुपलभ्यत्वात् । न च हेतवो नाट्यार्पिता ज्ञापका एवेति वक्तव्यम्, व्यक्ताव्यक्तयोर्भावविभावयोः लिङ्गलिङ्गिसम्बन्धानुपपत्तेः । पुनश्च कथं भावो हेतुषु व्याप्रियमाणेषु अपि कालेन उपचीयेतैव क्वचित्तस्य ह्रासस्यापि दृष्टत्वाद् यथा शोके । प्रतीतिश्च प्रत्यक्षभिन्ना केन साध्येत्यपि वक्तव्यम् । विभावादिभ्यो लिङ्गेभ्यो रसप्रतीतिरिति स्वमतं शङ्कुकाचार्यैः प्रतिपादयद्भिः न्यायदर्शने स्वानुरागः प्रकाशित इति प्रायेण स्वीक्रियते बुधैः । तथा च वासनावस्थस्याव्यक्त-भावस्योत्पत्तिं सत्कार्यवादानुसारेण प्रतिपादयतो भट्टलोल्लटस्य मतं खण्डितं शङ्कुकेनासत्कार्यवादमाश्रित्य । तस्य मतेन नाट्यीयैर्विभावादिभिः लिङ्गैरनुमेयो विद्यमान इव रसः । "तस्माद् हेतुभिर्विभावाख्यैः कार्यैश्चानुभावात्मभिः सहचारिरूपैश्च व्यभिचारिभिः प्रयत्नार्जिततया कृत्रिमैरपि तथानभिमन्यमानैरनुकर्तृस्थत्वेन लिङ्गबलतः प्रतीयमानः स्थायी भावो मुख्यरामादिगतस्थाय्यनुकरणरूपः अनुकरणादेव च मानान्तरेण व्यपदिष्टो रसः । "विभावानुभावौ काव्यबलात् शिक्षातश्चानुसन्धेयौ" । व्याभिचारी कृत्रिमनिजानुभवार्जनबलात् । अनुसन्धातात्र नटोऽभिप्रेतः, तत्प्रदर्शितत्वाद् विभावादीनाम् । "स्थायी तु काव्यबलादपि नानुसन्धेयः" । स हि नाभिधानेन स्वरूपतः स्फुटो भवति । अभिनयेन तु स गम्यते "अवगमनशक्तिर्ह्यभिनयनं वाचकत्वादन्या । अत एव स्थायिपदं सूत्रे भिन्नविभक्तिकमपि मुनिना नोक्तम्" ।

स च स्थायी भावोऽनुकार्ये विद्यमानो नटेनानुक्रियते । "तेन रतिरनुक्रियमाणा शृङ्गार इति" । न च रत्यादेर्नटेऽविद्यमानत्वात् तदनुमानं भ्रान्तमेव स्यात् ततश्च तत्कार्यमपि रसानुभवात्मकं न सिद्ध्येदिति वाच्यम्, मिथ्याज्ञानादपि अर्थक्रियाया दृष्टत्वाद् मणिप्रभादर्शने दीपभ्रान्त्यापि लक्ष्यप्राप्तेरुदयात् । न चानुमितिरत्र भ्रान्तिज्ञानमेवेति वा

व्यवसातुं शक्यम् । न चात्र नर्तक एव सुखीति प्रतिपत्तिः, नापि रामः स्याद्वा न वायमिति प्रतीतिरस्तीति, तदाह–

**प्रतिभाति न सन्देहो न तत्त्वं न विपर्ययः ।**
**धीरसावयमित्यस्ति नासावेवायमित्यपि ॥**
**विरुद्धबुद्ध्यसंभेदादविवेचितसम्प्लवः ।**
**युक्त्या पर्यनुयुज्येत स्फुरन्ननुभवः कया" ॥** इति ।

**उत्पत्त्यनुकृती नैवं लौकिकक्त्वमपोहतः ।**
**प्रतीत्यनुमिती चापि ताटस्थ्यं विषये तथा ॥ ११ ॥**

भट्टलोल्लटमतेन लोकोत्पन्नो भाव एव रसोऽभिनयादिना तस्य प्रतीतिश्च सामाजिकस्य । शङ्कुकमतेन लौकिकभावानुकृतिरेव अनुमिति-गोचरो रसः । इदमत्रानुयोज्यम्, लौकिकभाव एव रसश्चेत् तत्रैव विश्राम्यतु रसार्थी, किमर्थं तेन विधेयो नाट्यायोजनायासः ? लौकिकभावरस-योरेवमभेदे लोकपुनरुक्तेरेव नाट्यं वैयर्थ्यमापद्येत । अथ भिन्न एव भावो रसाद् अनुकृतिरपि भावस्य रसाद्भिन्नैव स्यात् । अनुकरणं मूलस्य सादृश्यमुपस्थापयेद् मूलानुस्मृत्यर्थं हास्याय वा । अभिनयेन अनुकरणं प्रायेण हास्यायैव दृष्टम् । अथानुकरणस्य प्रयोजनं सादृश्योपस्थापनं तस्यापि तर्हि प्रयोजनं वक्तव्यम् । तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं सादृश्यस्य प्रयोजकम् । मूले दृष्टे असन्निहिते च सति सादृश्यं मूलस्मृतिप्रयोजकम्, अदृष्टे मूले सादृश्यं तदभिज्ञानसाधनम् । नाट्येऽनुकार्यं मूलं कदाचिद् इतिहासाद् आख्यानाद् वा उपात्तं स्यात्, न च तत् कस्यापि प्रत्यक्षम्, सामान्यवर्णननियतं तु तत्सादृश्यमभिज्ञान-साधनमयं रामोऽयं दुष्यन्त इति । तच्चाभिज्ञानं पुनरितिहासाख्यानादिस्मा-रकमेव । न च रामाद्यभिज्ञानमात्रेण नटे साध्यं किञ्चित् रसान्वयि प्रयोजनम् । एवं नाट्यप्रयुक्तं सादृश्यं न स्मृत्यर्थं नाप्यभिज्ञानार्थमनुकार्यस्य अदृष्टत्वात् कल्पनामात्रसत्वाच्च । न च नाट्यप्रयुक्तं सादृश्यं चरिताख्यानवद् जनाकृत्यालेख्यवद् वा स्मरणीयं विषयं कौशलव्यञ्जितभावं प्रत्युपस्थापयेदिति वाच्यम्, तादृशनाट्यस्य इतिहासमात्रपर्यवसायित्वात् ।

रसव्यञ्जकत्वे तु पुरुषविशेषविषयत्वेऽपि सरसचित्रवद् भावोद्बोधकबिम्बवत्वं सादृश्यस्य । रेम्ब्रान्ट इत्याख्यस्य चित्रकृतश्चित्राणि न हि तत्तत्पुरुषव्यक्तीनामाकृतीतिवृत्तसंरक्षणार्थं संमान्यन्ते, नापि बुद्धचरितहर्षचरितादीनि शेक्सपीयरेयेतिहासनाट्यानि वा घटितयाथार्थ्यनिरूपकतया संभाव्यन्ते । एतेन अनुकृतिः सादृश्यं चेति, असामान्यमेवार्थं ब्रूतः, न तत्र कश्चिद् विशेषोऽनुकार्यतया विवक्षितः, सामान्यस्यैव विभावस्य तु विशेषवद् रूपं नाट्योपयोगिसम्भाव्यस्वभावतया भूतार्थोपममिति सादृश्याभिधानम्, न तु वस्तुविशेषस्य तत्र अनुकृतेः । अनुकृतिसादृश्यपदाभ्यां बुद्धिस्थार्थबिम्बात्मकं सादृश्यविधानमेवाभिप्रेतम् ।

"न चात्र नर्तक एव सुखीं"त्यादिना स्पष्टमेवावसेयं न शङ्कुकाचार्यैः सादृश्यं न्यायसिद्धार्थे प्रयुक्तम्; अपि तु कल्पितार्थे स्मृत्युद्बोधके । पुनश्च "प्रतिभाति न सन्देह" इत्यादिनावसेयं नानुमितेरत्र न्यायसंमतप्रमितिविशेषार्थे प्रयोगोऽभिप्रेतः; अपि तु सादृश्यमूलकाद् व्यञ्जकाद् वा सङ्केताद् अप्रत्यक्षस्यापि प्रत्यक्षवद् ग्रहणम् । वास्तवमभिमतमाचार्यस्य रसानुभूतेः वैलक्षण्यपरकमेव यद्यपि लौकिकभावात्मकत्वं तस्या न त्यक्तम्, तेन विरुद्धाभासं तन्मतं वितत्य खण्डितं भट्टतौतेन । रसस्यानुकरणरूपता सामाजिकप्रतीतिमपेक्ष्य विवक्षिता स्यात् नटमपेक्ष्य वा विवेचकबुद्धिमपेक्ष्य वा भरतमुनिवचनमपेक्ष्य वा । आद्यः पक्षोऽसङ्गतः, नटाभिनयलक्ष्यदेहविकाराणां जडानां रत्यादिचित्तवृत्तिरूपतयानुकारबोधस्य असम्भवात् । "न च रामगतां रतिमुपलब्धपूर्विणः केचित्, एतेन रामानुकारी नट इत्यपि निरस्तः प्रवादः" । अथ मन्यते नटाकारैः लोकवद् रत्यादिचित्तवृत्तिरवगम्यत इति तर्हि नटगता "रत्याकारेणैव सा प्रतिपन्नेति दूरे रत्यनुकरणतावाचोयुक्तिः" । न च नटीयविभावादीनां कृत्रिमत्वात्तेषु पारमार्थिकानामनुकारप्रतीतिरिति वाच्यम्, कृत्रिमत्वेन प्रतीतेरनवगम एव प्रसज्येतानुकार्यस्य । ननु कृत्रिमत्वादेव अतत्कार्यैर्विभावादिभिः कारणान्तरं प्रतीयेतानुकार्यचित्तवृत्तिभिन्नतदनुकृतिरूपमिति चेत्, न, यत्कार्यत्वेन विभावा अभिमतास्तदेव तैरनुमेयम्, अभिनीतकटाक्षा नटचेष्टाजन्यत्वेन चेन्निश्चिता न रतिमनुमापयिष्यन्ति, अथ रतिजन्यत्वेन चेद् भ्रान्त्या निश्चिता नटरतिमेवानुमाप-

यिष्यन्ति न नटगतरत्यनुकारम् । उभयथापि न रत्यनुकारोऽनुमितिविषयः । रतिर्वा तद्विषयः स्याद्रतिभिन्नो वा कश्चित्पदार्थः ।

हेमचन्द्राचार्यैर्भट्टतौतस्याशय इत्थं व्याख्यायि–"अयं भावः प्रसिद्धाद् रतिलक्षणात्कारणाद् रत्यनुकरणं नाम कारणान्तरं तत्प्रभवाश्चेद् अनुभावाः स्युः, तथैव च विशेषविदा यदि ज्ञायेरन् तदा रत्यनुकरणलक्षणस्य वस्त्वन्तरस्यानुमानं समञ्जसं मे स्यात् । न चैवम्, तत्कथमिव रत्यनुकरणप्रतीतिः । अविशेषविदा च तथाविधानुभावदर्शने रतिरेवानुमीयते, तच्च मिथ्याज्ञानमेवेति" । एवं सद्हेतुना वा स्यादसद्हेतुना वा उभयथापि रतेरेव प्रतीतिर्न तदनुकृतेः ।

नटोऽनुकरोतीत्यपि न वक्तुं युज्यतेऽनुकार्यस्य तेनानुपलब्धपूर्वत्वात्। न चोत्तमप्रकृतेरनियतस्य सामान्यतयैव अनुकार इति वक्तव्यम्, तत्रापि विशिष्टतां विनानुकार्यस्य बुद्धावनारोप्यत्वात् । यस्य कस्यचिदपि रतिशोकादिविशिष्टस्य विलपतश्चेत् तत्रानुकार्यवर्गात् कथं नटेन स्वात्मा निवार्यः । अन्तर्भाविते चात्मनि "गलितोऽनुकार्यानुकर्तृभावः" । नटस्तु "शिक्षावशात् स्वविभावस्मरणाच्चित्तवृत्तिसाधारणीभावेन हृदयसंवादात् केवलमनुभावान् प्रदर्शयन्......चेष्टत इत्येतावन्मात्रेऽस्य प्रतीतिर्न त्वनुकारं वेदयते" ।

यदि वस्तुतत्त्वविवेचकदृशा प्रतीतिगतविषयाकारो बाह्यविषयसदृश इति तदनुकारतया प्रतिपाद्यः स्यात्, तथाप्यसङ्गतं स्यात् "असंवेद्यमानस्य वस्तुवृत्तत्वानुपपत्तेः" । नापि मुनिवचनमेवानुकारपरं व्याख्यातुं शक्यम् ।

वस्तुतः शङ्कुकमतेन रसप्रतीतिः चित्रतुरगादिन्यायेन सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणैव । भट्टतौतस्तु तत्खण्डने सर्वथैव द्वयकरणप्रवृत्तः सम्यङ्मिथ्याप्रतीत्योर्विभज्यैव रसप्रतिपत्तिं युक्तीरुपन्यस्यतीति न तत्प्रस्तुतो विमर्शस्तत्त्वमवगाहते । प्रतीतिवादादारभ्यापि हि शङ्कुकमतमाभासवाद एव विश्राम्यति । विश्वाभासवादमभ्युपगच्छद्भिरपि यदभिनवगुप्तपादैः शङ्कुकमतस्य विततं खण्डनमनूदितं तत्स्वसम्प्रदायागतयुक्तिविन्यासवशादेवेति प्रतीयते ।

चित्रतुरगदृष्टान्तोऽत्र विचारमर्हति । वर्णाः पटे तुरगमाकृत्या प्रत्याययन्ति, सा च प्रतीतिः सम्यङ्मिथ्यादिप्रतीतिविलक्षणा अपर्यनुयोज्यानुभवतया स्फुरति । तथैव विभावादयोऽपि रसमाभासयन्तीति शङ्कुकमतरहस्यम् । अभिनवगुप्तपादास्तु तत्खण्डयन्ति—"सिन्दूरादयो गवावयवसन्निवेशसदृशेन सन्निवेशविशेषेणावस्थिता गोसदृगिति प्रतिभासस्य विषया नैवं विभावादिसमूहा रतिसदृशताप्रतिपत्तिग्राह्याः । तस्माद् भावानुकरणं रस इत्यसत्" । इति । अत्र तैः विभावादयो जडा भावश्च चित्तवृत्तिरूप इति तेषां न समानाकारतेति अभिप्रेतम् । वर्णा देशकालावस्थितद्रव्यगुणतया मूर्तद्रव्यान्तराकारानुकरणे समर्थाः स्युः, न तु प्रत्यक्षगोचरा विभावादयोऽपरोक्षभावादीनाम् आकारनिरूपणे समर्था निराकारत्वादेव तेषामिति कदाचित्तेषामभिमतम् । नत्वेतद् विवेचनं सम्यक् प्रतिभाति । प्रथमतस्तु अनेन चित्रनाट्ययोः सर्वथा पार्थक्यं विधीयते । शास्त्रतः सम्प्रदायतोऽपि चित्राद्रसप्रतिपत्तिः विवेचकसम्मता । यदि चित्रोपादानभूता वर्णाः स्थूलाकारनिरूपणमात्रे विश्रान्ताः, न तत्र रसप्रतीतेः काचिदाशा । पुनश्च नाकारशब्देन भौतिकवस्तुगत एव आकारो ग्राह्यः । मनोवृत्तिष्वपि लक्ष्यत एव क्रमात्मक आकारः सम्बन्धात्मकश्च । एवमेव नाट्यवस्तून्मीलनमपि सन्ध्यादिभिः अवच्छिन्नं बुद्धौ प्रकारविशेषम् आदधाति । येन च विशेषेण विषयो बुद्धिप्रकारं नियमयति स एव तस्याकारो वक्तव्यः । एवं सति विषयमात्रे आकारव्याप्तिः बोद्धव्या । यत् तु व्यक्त्याकृतिजातयः पदार्थ इति सूत्रितम्, तत्र व्यक्त्या उपादानकृतविशेषः, जात्या अनुगतधर्माः आकारेण च विषयगतविशेषः सूच्यत इति कल्पयितुं शक्यम् । तद् यथाप्यस्तु, प्रत्यक्षाकारेण जडेन चित्तवृत्तिः अनेकधा व्यङ्ग्या भवतीति निर्विवादम् । आकारस्य व्यञ्जकत्वं कदाचित् सादृश्यमादाय, कदाचित् सम्बन्धान्तरमादाय, कदाचिद् इच्छाकृतसङ्केतमादाय, कदाचित् सहानुभूतत्वसम्बन्धेन प्रवर्तते । न हि व्यञ्जक आकारः स्वभावनियतं लिङ्गमेव, नाऽपि स्वतः विषयाभिज्ञानकारको हेतुः । सङ्केतप्रतीकप्रतिबिम्बसंस्कारोद्बोधकादिरूपैः आकाराः ज्ञाततया अनुपस्थितं परोक्षं विषयं प्रत्याययन्ति यथा शब्दा अर्थान् । एतदेव तेषां व्यञ्जकत्वम् । तथापि

अस्त्येव प्रसिद्धम् अभिव्यञ्जनप्रकारगतं द्वैविध्यम् । प्रथमप्रकारो यथा चित्रेषु तद् तत् विषयरूपम् आकारतः शृङ्गग्राहिकयेव प्रदर्शयितुं शक्यम् । द्वितीयो यथा नानार्थाः शब्दैः सङ्केतवशाद् अभिधेयतया प्रत्याययितुं शक्याः । न च चित्रादिषु चेतनाभावलावण्यादीनि, काव्ये वा भावरसादयस्तथा प्रत्याययितुं शक्यन्ते । चित्तापरोक्षा भावाः प्रायेण अभिहिता अपि न स्वरूपतया भासन्ते तावतैव । एतादृशार्थबोधिनी शक्तिः पूर्वोक्तव्यापारद्वयाद् भिन्नैव शब्देषु सङ्केतान्तरेषु च कल्प्यते । तादृक् पृथक् शक्तिकल्पनाभावादेव शङ्कुकमतम् अभिनवगुप्तपादानां ध्वनिवादिनां न रुचिस्वारस्यं आवहतीति प्रतीयते ।

अन्यदपि सांख्यदृशा रससूत्रस्य व्याख्यानम् अभिनवभारत्याम् उद्धृतम् उपलभ्यते । तत्र "सुखदुःखजननशक्तियुक्ता विषयसामग्री बाह्यैव सांख्य-दृशा सुखदुःखस्वभावो रसः । तस्यां च सामग्र्यां दलस्थानीया विभावाः संस्कारकाः अनुभावव्यभिचारिणः, स्थायिनस्तु तत् सामग्रीजन्या आन्तराः सुखदुःखस्वभावा इति अभ्यधायि" । अभिनवगुप्तेन मुनिवचनविरोधादेव मतमिदम् अपहस्तितम् । भावरसयोर्विवेको मुनिना कृत इत्यभ्युपेयम्, तथापि न स विवेक आत्यन्तिकस्तत्र मतः । भरतोक्तदृष्टान्तं चानुसरतीव सांख्यव्याख्यानयुक्तिः । तथापि भावाः सुखदुःखस्वभावाः रसाः, न सर्वथानन्दात्मान इति मतम् उक्तकाले नासीत् सर्वस्वीकार्यम् । यथारामचन्द्रगुणचन्द्रयोः नाट्यदर्पणादवसीयते । आधुनिकास्तु पाश्चात्त्यपरम्पराम् अनुसरन्तः सुखदुःखस्वभावताम् एव प्रायेण समर्थयन्ति । लोकानुभव एवात्र भावमुख्यतया शब्दाभिनयादिभिः रचनाविशेषरूपान्तरितो दृष्टिविशेषेण सङ्गततया समग्रतया च आभास्यते रसिकचेतस्सु ।

त्रिष्वप्येतेषु मतेषु लौकिक एव भावो रसः काव्यनाट्याद्यवगमितः । द्वावत्र पक्षौ रसस्य विचार्यतामायातौ । प्रथमः पक्षः सुखदुःखसंभिन्ना लौकिकभावात्मता रसस्येति, अपरश्च अविद्यमानार्थस्य च शब्दाभिनया-दिभिः कौशलविशेषेण स्फुटाकारतया प्रतीतिरेव रस इति । कथं लौकिकसुखदुःखतां विहाय भावा रसरूपतया परिणमन्ते सामाजिकेषु, कथं

च लोकः प्रतिबिम्बमात्रोपस्थितः सार्थकः स्वायत्त इव च प्रत्यक्षायते, किं च तत्कौशलं येन माययेव लोको लौकिंको भावश्च लोकोत्तरमास्वादघनं च रूपं गम्यते, इत्यादिविचारः पूर्वाचार्यैः कृतोऽपि चेन्नोपलभ्यत इदानीम् । नाट्यादिषु लोकवद् वृत्तं लोकवच्च भावचेष्टादयो दृश्यन्ते, तत्प्रेक्षमाणैस्तल्लीनमानसैः चित्तवृत्तयोऽनुव्यवसीयन्त इति निश्चप्रचम्, तथापि नात्र लोकवद् अनुभूयमानसुखस्य क्रमसन्दत्वं दुःखस्य वा तत्कालप्रतीकारापेक्ष्यसह्यतीव्रोद्वेगकरत्वम्, न वा श्रमो मोहो वा नापि स्वीयत्वेनाभिमतस्मृतिसंस्कारार्जनम् । प्रत्युत–

**"नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।**
**नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥**

इति प्रसिद्धं रसानुभूतेर्लोकवैलक्षण्यम्

**साधारणीकृतिर्नाट्यं लोकाद् भेदयतीति यत् ।**
**भट्टनायकपादोक्तं तत्प्रायः सर्वसंमतम् ॥ १२ ॥**

एतच्च वैलक्षण्यं भट्टनायकेन सम्यक् प्रतिपादितं सहेतुकम् । "न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते नोत्पद्यते, नाभिव्यज्यते अपि तु काव्ये नाट्ये चाभिधातो द्वितीयेन विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्वेन भुज्यत इति" । इदमत्राभिप्रेतम्– रसोत्पत्तिश्चेत् स्वीक्रियते सामाजिके सीतादिषु तस्य कामित्वं स्यात् करुणोत्पत्तौ च दुःखोद्वेगः प्रतीतावपि आत्मगतत्वेन समानो दोषः पुरः स्फुरेत् । अथ परगतत्वेन ताटस्थ्येन प्रतीयते चेत्, रसनीयत्वाभाव एवापद्येत । स्वीयत्वेन परत्वेन च अनवधारिता एव विभावादयो व्यवसीयन्ते । अयं च साधारणीकरणात्मको व्यापारो भावकत्वव्यापार उच्यते भट्टनायकेन । स च अभिधातो द्वितीय इत्युक्त्याभिधाया लक्षणायाश्च विलक्षण एव । तथा च काव्ये नाट्ये च प्रस्तुता अर्थाः साधारण्येन भाव्यमाना एव रसमर्पयन्ति । तेषु साधारणीकृतविभावादिषु भाव्यमानेषु सत्त्वोद्रेकाद् आनन्दमयो भाति स्थायी । अयं च भोगीकरणव्यापार उच्यते ।

लोके प्रणयिनां विद्वेषिणां वा चेष्टितानि पश्यता नास्वाद्यते कश्चिद्रसः, नापि परोक्षं तादृशवृत्तमनुमिमानेनोपलभ्यते रसः । "न च शब्दानुमानादिभ्यस्तत्प्रतीतौ लोकस्य सरसता युक्ता प्रत्यक्षादिव । नायक-युगलकावभासे हि प्रत्युत लज्जाजुगुप्सास्पृहादिस्वोचितचित्तवृत्यन्तरोदय-व्यग्रतया का सरसत्वकथा स्यात् । तन्न प्रतीतिरनुभवस्मृत्यादिरूपा रसस्य युक्ता" । न च उत्पत्तिप्रतीतिव्यतिरेके रसस्याभिव्यक्तिरिष्यताम्, अभिव्यक्तौ विषयस्य क्रमेणोन्मीलनप्रसङ्गात् ।

इदमत्रावधेयम्, व्यञ्जकत्वव्यापारो वैयाकरणैः स्फोटवादसमर्थनाय प्रथमं कल्पितोऽन्यैरपि सोऽभ्युपगतः । घटदीपन्यायेन व्यङ्ग्य-व्यञ्जक-सम्बन्ध उदाहृतः प्रायेण, यथा **"स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः । यथा दीपोऽन्यथाभावे"** इत्यादिना । मीमांसकैर्बौद्धैश्च स्फोटवादस्य व्यक्तिवादस्य च खण्डने इयं "विषयार्जनतारतम्यापत्तिः" आपादिता । वेदान्तिभिस्तु स्फोटखण्डने कृतेऽपि व्यक्तिवादः समाश्रित एव, न च तत्र व्यङ्ग्यस्य पृथगस्तित्वं क्रमोन्मीलनं वानिवार्यतयापेक्ष्यते । यत्र वर्णाः स्फोटं व्यञ्जयन्ति तत्र व्यञ्जकस्य नियतक्रमत्वाद् व्यङ्ग्येऽपि क्रमप्रसङ्गः, दीपव्यङ्ग्ये घटे सप्रदेशत्वात् क्रमापत्तिस्तत्त्वमस्यादिवाक्यज्ञानव्यङ्ग्ये त्वात्मनि अखण्डार्थस्याक्रमैव व्यक्तिः । एवं भट्टनायकस्य व्यक्तिवादखण्डनं लेशमात्रोपदर्शितं न विमर्दसहम् ।

यच्च तत्कृतं भट्टलोल्लटादिपक्षखण्डनं तदशक्यपरिहारमेवेति प्राहुरभिनवगुप्तपादाः । तथापि भट्टनायकस्य भुक्तिवादो न युक्तिसहः । "प्रतीत्यादिव्यतिरिक्तश्च संसारे को भोग इति न विद्मः" । अथ भुक्तिः रसास्वाद एवेति चेत् सोऽपि प्रतिपत्त्यात्मक एवेति कथं तस्य प्रतीतेर्वैलक्षण्यम्, "दर्शनानुमितिश्रुत्युपमितिप्रतिभानादिनामान्तरवत्" । तथा च "निष्पादनाभिव्यक्तिद्वयानभ्युपगमे च नित्यो वाऽसन् वा रस इति न तृतीया गतिः स्यात्" । उभयथापि च व्यवहारायोग्यता अविषयस्योत्पत्ति-प्रतीतिव्यक्तीनाम् ।

अथ चित्तस्य द्रुत्याद्यवस्था एव भोगीकरणस्वरूपतयाभिमताः, तदवितथमपि न रसस्वरूपं सम्यग् बोधयति, न हि रसानां नानात्वं तिसृभिरेव चित्तावस्थाभिः सम्पाद्यम् । "यावन्तो हि रसास्तावत्य एव रसनात्मानः प्रतीतयो भोगीकरणस्वभावाः । गुणानां चाङ्गाङ्गिवैचित्र्यमनन्तं कल्प्यमिति का त्रित्वेनेयत्ता" ।

यत्तु भट्टनायकेन रसा भावनाभाव्या इत्युक्तं तत्सम्यग्व्याख्यातमभ्युपगम्यत एव गुप्तपादैः । भावना चेद् विभावादितन्मयीभावेन अभिप्रेतार्थस्य आस्वाद्यतापादनं, स्वीकार्यैव तद्विषयता रसस्य । तथा चोद्धृतम्—

**"भावसंयोजनाव्यङ्ग्यपरसंवित्तिगोचरः ।**
**आस्वादनात्मानुभवो रसः काव्यार्थ उच्यते ॥"**

"अन्यत्र च—

**"संसर्गादिर्यथा शास्त्र एकत्वात्फलयोगतः ।**
**वाक्यार्थस्तद्वदेवात्र शृङ्गारादी रसो मतः ॥**

व्यक्तिविवेक एव च पुना रसनापरपर्यायस्य भोगस्य ब्रह्मानन्दतुल्यतावचनमप्युद्धृतम्, यथा——

**"पाठ्यादथ ध्रुवागानात् ततः सम्पूरिते रसे ।**
**तदास्वादभरैकाग्रो हृष्यत्यन्तर्मुखः क्षणम् ॥**
**ततो निर्विषयस्यास्य स्वरूपावस्थितौ निजः ।**
**व्यज्यते ह्लादनिष्यन्दो येन तृप्यन्ति योगिनः" ॥**

न चैक्यमेव ब्रह्मानन्दरसयोः, उक्तं हि—

**"वाग्धेनुर्दुग्ध एतं हि रसं यद् बलतृष्णया ।**
**तेन नास्य समः स स्याद् दुह्यते योगिभिर्हि यः" ॥**

एवं भट्टनायककृतव्याख्यानस्यायं निर्गलितार्थो हेमचन्द्रोद्धृतः –

**अभिधा भावना चान्या तद्भोगीकृतिरेव च ।**
**अभिधाधामतां याते शब्दार्थालङ्कृती ततः ॥**
**भावनाभाव्य एषोऽपि शृङ्गारादिगणो मतः ।**
**तद्भोगीकृतरूपेण व्याप्यते सिद्धिमान् नरः" ॥**

इति । तिस्रोऽत्र प्रतिपत्तयः । उत्पत्तिप्रतीतियोगविरहाद् रसो लौकिकभावेभ्यो विलक्षणः, भावनया विभावादयः साधारणीक्रियन्ते, रसश्च भोगीक्रियते । प्रथमात्र प्रतिपत्तिरदोषा । द्वितीया साधारण्यं सम्यङ् निर्दिशन्त्यपि भावनास्वरूपं न विशदयति, तृतीया तु पुनरुक्तिपङ्कान्नोन्मज्जति । तात्पर्यार्थ इव वाक्याद् रसोऽवगम्यते, आत्मेवान्तर्मुखचेतसाऽपरोक्षीक्रियत इति च रसतत्त्वरहस्यवेदित्वमाचार्यस्य विव्रियते । तथापि का सा शक्तिः शब्दस्य यया रसः संवेद्यत इति ध्वनिविरोधिनाचार्येण न स्फुटं प्राकाशि ।

**ध्वनिवादं समालम्ब्य गुप्तपादैः प्रकाशितम् ।**
**रसस्य परमं तत्त्वं संविद्विश्रान्तिलक्षणम् ॥ १३ ॥**
**प्रतिबिम्बसमो लोको भावोल्लेखितया स्फुरेत् ।**
**भावश्च विषयः साक्षाद् अनावरणसंविदः ॥ १४ ॥**

भट्टनायककृतसूत्रपातमेव व्याख्यानमभिनवगुप्तपादैः प्रत्यभिज्ञामतमनुसरद्भिः परिष्कृतं परिवर्धितं च । लोकवैलक्षण्यकारि साधारण्यं नाम वर्ण्यविषयविशेषणीभूतदेशकालयोः स्वगतव्यावहारिकदेशकालयोः तथा काव्यादिविषयस्य प्रमातुश्च सामाजिकस्योभयोरेव लोकसिद्धयाथात्म्यस्य च स्थगनमेव । शाकुन्तलप्रेक्षको नात्मनो व्यावहारिकं लोकसिद्धं याथात्म्यं स्मरति– 'एषोऽहं राजामात्यो बहुकरणीयो रोषणकलत्रभर्त्सनाभीरु"रित्यादि, नापि तस्य शकुन्तलाविषयः 'परमार्थतः समुपस्थिता इयं काचित् स्त्री'ति प्रत्यक्षमूलो व्यवसायः । नाट्योपदर्शितशकुन्तलादिविषयो नाट्यप्रेक्षकश्च

स्वस्वव्यवहारसिद्धरूपाभ्यां मोचितौ भावालम्बनाश्रयतयैव चैतसीमेव भूमिमाकारवद् गाहेते । दुष्यन्ताश्रयायाः शकुन्तलालम्बनायाश्च रतेः साक्षितया तिष्ठति सामाजिकः । अयं च भावसाक्षात्कार एव रसः । तत्र विषयप्रमात्रोः साधारण्यं न परिमितम्; अपि तु विततमेव । यथा व्याप्तिग्रहणे विशेषाः सामान्यमवगमयन्ति सर्वेषां तथैवात्रापि व्यापकं भावतत्त्वमेव सर्वैः सामाजिकैः साक्षात्क्रियते । उक्तं च– "वस्तुसतां काव्यार्पितानां देशकालप्रमात्रादीनां नियमहेतूनामन्योन्यप्रतिबन्धबलाद् अत्यन्तमपसरणे स एव साधारणीभावः सुतरां पुष्यति । अत एव सर्वसामाजिकानामेकघनतयैव प्रतिपत्तिः सुतरां रसपरिपोषाय सर्वेषामनादिवासनाचित्रीकृतचेतसां वासनासंवादात्" ।

एवं प्रत्यक्षानुमानोपमानाभिधानादिप्रमाणागोचरं भावनागोचरं विततसाधारण्यलक्षितं भावं साक्षात्करोति रसात्मना । न भावनात्र मीमांसकप्रसिद्धा नापि योगोपासनादिप्रसिद्धेन भाव्यस्य चेतसि पुनः पुनरनुसन्धानेन तुल्या तदभिन्ना । न हि चेतसः सप्रयत्न-मैकाग्र्यकरणमेवात्र विवक्षितम् । काव्यभावनायामर्थमहिम्ना स्वयमेव चित्तं तमनुसन्दधत्तन्मयीभवति । भावना मानसप्रत्ययप्रवाहात्मिका कल्पनैव या भावसौष्ठवं स्वच्छन्दतया योजयति विशदैराकारैः[2] । न हि कविः शकुन्तलादिविषयान् प्रत्यक्षीकृत्य तदितिवृत्तमिव काव्यं निबध्नाति प्रत्युत कल्पनोपदर्शितमेव भावं स्वानुभूतं वैकदेशिमतेन योग्यैराकारैः विभावादिभिः संयोज्य सहृदयभावनार्थमुपन्यस्यति ।

कश्च सम्बन्धोऽस्या भावनायाः काव्यशब्दैः नाट्याभिनयादिभिश्चेति विचारणीयम् । अस्ति शब्देषु प्रसिद्धैव अर्थसङ्केतशक्तिः इच्छाजन्य-रूढिमूला, तथा च अभिनयादिषु सादृश्यमूलो रूढश्च सङ्केतोऽर्थप्रत्यायकः । रूढैः सङ्केतैरुपलब्धोऽर्थो निश्चितः पश्चात् स्वसङ्केतविशेषान् विहाय स्वरूपत इव बुद्धौ स्थिरो भवति सङ्केतान्तरैरपि स प्रकाशनीयतामर्हति लोके । अस्ति पाटलिपुत्रं नाम नगरमिति श्रुत्वा पाटलिपुत्रनगरास्तित्वं ज्ञात्वा तच्चिन्तयन् न तदेव वाक्यं मनस्यावर्तयति । जातककथां काञ्चि-च्छ्रुत्वा तदभिप्रायं ज्ञात्वा तत्कथावाक्यनिरपेक्षमेव तमभिप्रायं विचार-

यति । काव्यनाट्ययोर्गतिर्भिन्नैव । तत्र श्रुताः शब्दाः प्रत्यक्षीकृता वाभिनया अर्थसन्ततिमिव निश्शेषमविश्लेष्यां ध्वनयन्ति । स च भावसंश्लिष्टोऽर्थः स्वसङ्केताश्लेषी स्वानुसन्धानरूपां भावनां जनयति । यथा यथा काव्यशब्दा भाव्यन्ते तथा तथा शब्दभावनामजहदेव तदर्थमहिमा भूमेव प्रतन्यते । इयमेव शक्तिः शब्देषु व्यञ्जना ध्वनिर्वेत्युच्यतां तत्त्वतः ।[3] स्वरूपतस्तु अयं व्यापारो न शब्दमात्रे नियतः । चित्रेषु प्रतिमासु संगीते च प्रत्यक्षगृहीता रूपध्वन्यादयः स्वाकारयोजनया भावप्रवणां जनयन्ति भावनाम् । अतश्च भोजराजेन चित्रादिकला उद्दीपनविभावे गणिताः शृङ्गारप्रकाशे । कविकुलगुरुवचनं च "रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दानि"त्यादि अस्यैव व्यञ्जकत्वव्यापारस्य रूपादिगतस्य प्रमाणम् । शब्दादिप्रवृत्तो भावनाप्रवर्तकोऽयमेव व्यापारः । विभावादिनिरूपणमस्यैव प्रपञ्चः ।

अभिनवगुप्तपादैः रसोऽविध्ना संविच्चमत्कारिणी च अभिहिता । चमत्कारस्य च लक्षणं कृतम्– "स च तृप्त्यव्यतिरेकेण अविच्छिन्नो भोगावेश इत्युच्यते" । "भुञ्जानस्य अद्भुतभोगस्पन्दाविष्टस्य च चमतः करणं चमत्कार" इति । ईश्वरप्रत्यभिज्ञाविमर्शिन्यां चाचार्यैरुक्तम्– "चमत्कारिता हि भुञ्जानरूपता स्वात्मविश्रान्तिलक्षणा सर्वत्र इच्छा......" "क्वचिदनागूरितविशेषा रागः, क्वचिदागूरितविशेषता कामः, क्वचिद-भिलाषमात्रं यथा कालिदासीये पूर्वोद्धृते पद्ये । स च "साक्षात्कारस्वभावो मानसाध्यवसायो वा सङ्कल्पो वा स्मृतिर्वा तथात्वेन स्फुरत्यस्तु" । पुनरप्ययं रसास्वादः "प्रतिभानापरपर्यायसाक्षात्कारस्वभाव" इत्युक्तम् । प्रतीतिश्चैषा आस्वादात्मा "न लौकिकी, न मिथ्या, नानिर्वाच्या, न लौकिकतुल्या, न तदारोपादिरूपा" । या च विषयसामग्री रसप्रतीतौ तदालम्बनतया विभाति साऽपि तद्बाह्येति न व्यवसेयम् । प्रत्यभिज्ञादर्शने हि विज्ञानवादवद् विषयाः प्रकाशाभिन्ना आभासा एव गम्यन्ते । व्यवहारे वस्तुतत्त्वं तथैवास्तु मा वा, काव्यादिषु रसप्रतीतौ तथैव प्रतीतिसारं प्रतिभाति । एवं च "सर्वथा रसनात्मकवीतविघ्नप्रतीतिग्राह्यो भाव एव रसः" ।

एवमेषा प्रतीतिः "चमत्कारनिर्वेशरसनास्वादनभोगसमापत्तिलय-विश्रान्तिशब्दैरभिधीयते" ।

सप्त चात्र विघ्ना निर्दिष्टाः– (१) "प्रतिपत्तावयोग्यता सम्भावनाविरहो नाम", (२) "स्वगतत्वपरगतत्वनियमेन देशकालविशेषावेशः", (३) "निज-सुखादिविवशीभावः", (४) "प्रतीत्युपायवैकल्यम्", (५) "स्फुटत्वाभावः", (६) "अप्रधानता", (७) "संशययोगश्च" ।

प्रथमविघ्नविषये स्मर्तव्यं भट्टनायकेन देवतादिचरिते समुद्रलंघनादौ साधारणीकरणस्य असम्भाव्यता शङ्कितेति । गुप्तपादैरत्र अलोकसामान्येषु प्रख्यातवस्तुविषयतानियमो ग्राह्य इत्युत्तरं दत्तम् । यवनाचार्यवचनमपि स्मरणीयम् अघटितमपि सम्भाव्यं वृत्तम् उपादेयं न तु घटितमपि असम्भाव्यम् इति । समुद्रलंघनादि घटितमपि यद् असम्भाव्यम्, तत्र प्रत्यय इतिहासेन प्रसिद्ध्या च समुपजायते सामाजिकानाम् । किं सम्भाव्यम् किम् असम्भाव्यं अत्र भिद्यन्त एव प्रत्यया नानायुगेषु । कविना च निर्णयः स्वयुगनैरपेक्ष्येण विधातुं न शक्यते ।

द्वितीयतृतीयविघ्नौ भावालम्बनाश्रययोः साधारणीकरणमेव विहतः । चतुर्थः प्रतीतिस्फुटत्वविरोधी अशक्तिरूपः, पञ्चमोऽशक्तिफलमेवास्फुटत्वम्, "यदर्थमभिनया लोकधर्मिप्रवृत्तिवृत्त्युपस्कृताः समभिषिच्यन्ते, अभिनयनं हि सशब्दलिङ्गव्यापारविसदृशमेव प्रत्यक्षव्यापारकल्पम्" । षष्ठो विघ्नोऽप्रधा-नता नाम भावातिरिक्तस्य जडस्य विभावानुभाववर्गस्य व्यभिचारिणां चान्यमुखापेक्षिणां मुख्यतया निरूपणम् । स्थायी एव संविदात्मा चर्वणापात्रम् । सप्तमो विभावादिसामग्र्या असम्यक् प्रयोगादेवोद्भवति । अभिनवगुप्तपादनिरूपितो रसोऽलौकिकोऽपि त्रैलोक्यभावानुकीर्तनात् पुरुषार्थसंहितः, अकार्योऽपि विभावादिव्यङ्ग्यः, अज्ञाप्योऽपि संवेदनसिद्धः, तिरस्कृतसविकल्पकनिर्विकल्पकभेदः, सकलसहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणः, ब्रह्मास्वादमिवानु-भावयति भावसाक्षात्कारात्मकश्चमत्कारी । अयमेवाभिप्रायः साहित्यदर्पण-कारैः स्फुटं प्रकाशितः –

**"सत्वोद्रेकाखण्डप्रकाशानन्दचिन्मयः ।**
**वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः ॥**
**लोकोत्तरचमत्कारप्रायः कैश्चित्प्रमातृभिः ।**
**स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः" ॥**

विभावादिसमूहालम्बनात्मकश्चायम्–

**"रत्यादिज्ञानतादात्म्यादेव यस्माद्रसो भवेत् ।**
**ततोऽस्य स्वप्रकाशत्वमखण्डत्वं च सिध्यति" ॥**

एवं रसः संविद्विश्रान्तिरूपो भावसाक्षात्काराहितविलक्षणास्वादो विभावादिसमूहालम्बनस्तद्व्यक्तश्च । व्यक्तश्च व्यक्तिविषयीकृतः चिद्विषयीकृत इति यावत् । विभावादिव्यापारेण भग्नावरणा चिदेव स्थायिभावमन्तःकरणधर्मं स्वप्रकाशेन प्रकाशयन्ती साक्षात्करोति । तेन भग्नावरणचिद्विशिष्टो रत्यादिः स्थायी भाव एव रस इति निष्कर्षः । चितिः स्वाभासमयमपि विश्वमबुध्यमाना जाड्याहता परिमितप्रमातृत्वमादधती सुखदुःखात्मके भोगचक्रे भ्रमन्ती सौभाग्येन साधारण्यप्रतिभानवती सहृदयतावाप्त्या व्यञ्जकभग्नावरणा स्वाकारमिव भावलोकं साक्षात्कुर्वती स्वात्मनि विश्रान्तिं लभते । कविसहृदययोः समानमूले एव प्रतिभे । उक्तं हि– "कविर्हि सामाजिकतुल्य एव" । "कविगतसाधारणीभूतसंविदेव परमार्थतो रस" इति च । प्रतिभैव कविगता साधारण्येन विभावादिविषयाकारान् प्रतिबिम्बयन्ती तत्संलग्नं भावलोकं विवृणोति । तमेव च लोकं सहृदयः साक्षात्करोति संविन्मयो भावमयम् ।

गुप्तपादानां रसविवरणस्यातिशायित्वं निर्विवादम् । तथापि तदीयभावविवरणं विचारमपेक्षते । अलौकिको हि रस उक्तः कक्ष्यीकृतभावः, भावस्तु लौकिको जन्योऽपि ज्ञाप्योऽपि । कथमयम् अलौकिकरसाभ्यन्तरीभवति ? भावस्य रस्यमानतैव रसश्चेत् केयं रस्यमानता, किं भावस्य विक्रियाविशेषः प्रतीतिविशेषो वा । आद्ये रसो जन्यः स्यात्, द्वितीये प्रतीतेर्विषयावच्छिन्नत्वाद् विषयस्य च लौकिकत्वाद् रसोऽपि लौकिकः सम्पद्येत । रस्यमानो भावः साधारणीकृताकारमात्रोपस्थितालौकिकभावश्चेत् तस्यापि लौकिकभावेन सम्बन्धो निर्वचनीयः । साधारणीकृतभावे आकारमात्रे तत्त्वमात्रे वा कल्पिते तत्र भावस्यापरोक्षस्फुटता सुखादिरूपेण संवेद्यता च विगलेत् विकल्पमात्रं व्यावृत्तिमात्रं वा शिष्येत ।

रसनमपि यथाभूतसाक्षात्कारश्चेत् का तत्रास्वाद्यता ? आस्वादे सति स लोकतुल्य एव स्यात् । अलौकिकत्वे च क्वास्य लोक उपयोगिता ? कथमत्र दुःखिनः प्रवर्तेरन् ? संविद्विश्रान्तिश्चेद् रसः कथं भावसाक्षात्कारस्तदास्वादनं वा । कथं वा विभावादिभिः चिदावरणभङ्ग एव सम्पाद्यः ? कीदृशो वा रसास्वादः शुद्धानन्दरूपः, शान्तिरूपः, सुखदुःखात्मकः, एकोऽनेको वा ? अभिनवगुप्तमतेन रसः संविदो नातिरिच्यते, तस्य आत्मपरामर्शरूपत्वात्, भावोऽस्मिन्नात्मपरामर्शे उपाधिवद् वैचित्र्योपरञ्जकः । साधारणीकरण-स्वच्छाभेन भावेनाच्छादितेव संविदात्मानं विमृशति । साक्षात्कार-विषयत्वाद् भावो न साक्षात्कारिसंवित्स्वरूपभूतः । साक्षात्कारविषयत्वा-देव तु संविदो नेदिष्ठः । एवं रसो लौकिकसुखचिदानन्दयोरान्तरालिकः, भावोऽपि चित्तधर्मतया न बाह्यविषयवज्जडो नापि शुद्धचिदात्मकः, चिद्भास्यस्तु विषयजाड्यप्रतीत्यनभिभूतत्वे साधारणीकृतत्वे च सति विमले चेतसि सवासनात्मनः स्वभाव इवाभासतेऽपरोक्षो यथा दृष्टान्ते सनातनमितिवृत्तं स्यात् प्रतिबिम्बितम् । वासनात्मको भाव आत्मानात्म-ग्रन्थिसदृशः । बाह्यविषयानुधावनप्रवर्तकः स कर्मसंश्लिष्टो लौकिको जन्यो ज्ञाप्यश्च भवत्यावेगात्मको मनोविज्ञानविषयः । विमलप्रतिभाशालिनि प्रत्यङ्मुखे चेतसि साधारणाकारतया व्यावहारिकदेशकालप्रमात्रानालिङ्गितो भावो व्यक्तः साक्षात्कृत इति यावत् । न लौकिक इति वक्तुं शक्यो लोकसिद्धकर्मज्ञानभोगभिन्नत्वात्, न कर्मयोग्यः साधारण्यात्, नोत्पाद्यो व्यङ्ग्यत्वात्, न ज्ञाप्योऽपरोक्षत्वात् । रसान्तर्भूतो भावो मनोभूमिमात्र-व्यक्ताकारो विषयाकारोपस्थापकविभावादिसमूहालम्बनात्मको वासना-क्षिप्तलोकप्रतिबिम्बसमर्पकःतद्विषयितावच्छिन्नां संविदमपि प्रतिबिम्बयति ।

एवं भावो वासनात्मकश्चित्तधर्मो विमलबुद्धावाकारतः प्रतिभासमानो जीवस्वभावं तदिष्टानिष्टाकारप्रतिबिम्बनाद् अपरोक्षीकरोति[4] । रसश्च कल्पितविषयास्वादविवेचनोपरक्तः संविद्विश्रान्तिरूपः शमस्वभावः । संविल्लोकयोश्चात्र न पारमार्थिको भेदः, विश्वस्यैव संविदाभासरूपत्वात् । रसानुभवे संविदस्तत्कालमज्ञाननिवृत्तिरिवांशिकी जायते येनास्याः प्रत्यङ्-मुखत्वं स्वरूपशान्त्याभासः लोकजाड्यस्य च न्यक्कार इव लक्ष्यः । एवं भावबोधसंवलितात्मबोधरूपो रसः । विषयबोधस्तत्र इष्टानिष्टाकारकप्रति-बिम्बोपमः । आत्मापि विषयकल्पनाप्रवणेच्छाप्रधानसंविद्रूपः ।

विषयाभासालम्बनेन वासनाहितस्वरूपपरामर्शात्मना चैतन्येनाभिन्नरूपत्वाद् रसप्रमाता स्वप्नद्रष्ट्रा तैजसेन तुलनीयो भाति । यथाहुः— "जाग्रत्प्रज्ञा अनेकसाधना बहिर्विषयेवावभासमाना मनःस्पन्दनमात्रा सती तथाभूतं संस्कारं मनस्याधत्ते । तन्मनस्तथा संस्कृतं चित्रित इव पटो बाह्यसाधनानपेक्षं जाग्रद्वदवभासते । इन्द्रियापेक्षयाऽन्तःस्थत्वान्मनसः तद्वासनारूपा स्वप्ने प्रज्ञा यस्य इत्यन्तःप्रज्ञः विषयशून्यायां प्रज्ञायां केवलप्रकाशस्वरूपायां विषयित्वेन भवतीति तैजसः ......इह केवला वासनामात्रा प्रज्ञा भोज्या"[5] । भेदस्तु स्वप्नरसबोधयोः स्पष्ट एव, स्वप्ने जीवो मोहावृतत्वाद् जागरितसंस्कारमनुसरन् भ्रान्त एव, रसबोधे भावनाबलेन स्वतन्त्रतया सृजति वासनानुरूपं विवेकानुरूपं च लोकम् । अन्तःप्रज्ञत्वं वासनाभोगश्च तुल्यावेव । विवेकमोहौ च विशेषकौ । इदं च स्मर्तव्यं रसबोधलक्षणे भ्रमरूपत्वस्य बहुभिः प्राचीनार्वाचीनैराचार्यैर्निवेशः कृतः । जगन्नाथपण्डितराजसूसेनलैङ्गरकृतयोऽत्र उदाहार्याः[6] ।

परमार्थतो रसाभेदमपि स्वीकुर्वन्तोऽभिनवगुप्ताचार्या भावभेदेन रसभेदमपि अङ्गीचक्रुः भरतमुनिमनुसरन्तः । विदितमेव यत् कियन्तो भावा इत्यत्र नैकमत्यम् । मुनिना अष्टाविति प्रतिपादितम्, अभिनवगुप्तादिभिः नव रसा इति स्वीचक्रे । स एव च सम्प्रदायः प्रायेण सर्वसम्मतिं प्राप । तथापि भोजराजादयो वैष्णवाचार्याश्च नूतनानि मतानि प्रकाशयामासुरिति विदितमेव ।

गुप्तपादा भावनिर्धारणप्रसङ्गे आहुः— "स्थायित्वं चैतावतामेव । जात एव हि जन्तुरियतीभिः संविद्भिः परीतो भवति, तथा हि "दुःखसंश्लेषविद्वेषी. सुखास्वादनसादरः" इति न्यायेन सर्वो रिरंसया व्याप्तः स्वात्मन्युत्कर्षमानितया परमुपहसन्नभीष्टवियोगसंतप्तस्तद्हेतुषु कोपपरवशोऽशक्तौ च ततो भीरुः किञ्चिदार्जिजीषुरप्यनुचितवस्तुविषयवैमुख्यात्मकतया क्रान्तः किञ्चिदनभीष्टतयाऽभिमन्यमानस्तत्तत्स्वकर्तव्यदर्शनसमुदितविस्मयः किञ्चिच्च जिहासुरेव जायते । न ह्येतच्चित्तवृत्तिवासनाशून्यः प्राणी भवति । केवलं कस्यचित्काचिदधिका कस्यचिदूना । कस्यचिदुचितविषयनियन्त्रिता कस्यचिदन्यथा । तत्काचिदेव पुमर्थोपयोगि-

नीति उपदेश्या । तद्विभागकृतश्चोत्तमप्रकृत्यादिव्यवहारः ।" हेमचन्द्राचार्यैरपि सदृशमेव विवरणमुपन्यस्तम् । तथापि साक्षात् स्वचित्तप्रत्यवेक्षयैव न भावानामियत्ता निर्धारियतुं शक्येति स्मरणीयम् ।

न च स्थायिनोऽनादिवासनात्मका एव, अनुभववासनानामपि तत्रान्तर्भूतत्वात् । सहजोऽभिमानस्तन्निबन्धनौ रागद्वेषौ सहजाभिनिवेशान्मृत्युभयं दुःखानुभवः कामश्चेति सर्वमनुष्येषु जन्मतो लक्ष्यन्ते, तथापि तेषां लोकसम्मतानि रूपाणि तु भिद्यन्त एव । तान्येव च लोकप्रतीतानि कविरनुसरति, न नानाशास्त्रविवादितानि तन्मूलभूतानि परोक्षाणि तत्त्वानि । पुनश्च विवेकित्वाद् मनुष्येषु धर्मबुद्धिरास्तिक्यबुद्धिश्च दृश्येते तन्मूलोत्साहभक्ती च । नानालोकव्यवस्थासु एतादृश्यो वृत्तय इच्छामूला भावपदेन व्यपदेश्या अनियतसंख्याका अनियतरुपाश्चोपलभ्यन्ते, विभावादयोऽपि तेषां भिद्यन्त एव । न तत्र इयत्ताकरणं युज्यते । अतश्च रससंख्यानियमनमपि न युज्यते । सहजप्रवृत्तिनिबन्धना आवेगाः, लौकिकाभिमानाधिष्ठिता भावाः, रसाभ्यन्तरीभूताः साधारणीकृताश्च भावा इति तिस्रो भूमयो विवेचयितुं शक्याः । आद्या नियतप्राया, अपरे द्वे तु अनियतविषये ।

अभिनवगुप्तपादास्त्वाहुः— "एवं ते नवैव रसाः । पुमर्थोपयोगित्वेन रञ्जनाधिक्येन वा इयतामेवोपदेश्यत्वात् । तेन रसान्तरसम्भवेऽपि चार्षप्रसिद्ध्या संख्यानियम इति यदन्यैरुक्तं तत्प्रत्युक्तम् । .......आर्द्रतास्थायिकः स्नेहो रस इति त्वसत् । स्नेहो ह्यभिषङ्गः । स च सर्वो रत्युत्साहादावेव पर्यवस्यति । .......एषैव गन्धस्थायिकस्य लौल्यरसस्य प्रत्याख्याने सरणिर्मन्तव्या । ........एवं भक्तावपि वाच्यम्" । इदं तु पूर्वोक्तयुक्तिविरुद्धं चिन्त्यं च । रसास्वादस्य शमप्रायत्वमभिदधद्भिराचार्यैस्तस्याद्वैतमेवार्थत आक्षिप्तम् । भावानामनियतत्वं तु इतिहाससिद्धम्[7] ।

**एक एव रसो नानाभावोपाधिविभेदितः ।**
**आत्मप्रतीतिसंलग्ना भावाः संस्कारभेदिताः ॥ १५ ॥** इति ।

**पादटिप्पण्यः –**

1. न्योलीत्याख्येन इतालियादेशवासिना **अभिनवगुप्तस्य रससूत्रविवृतिः** सुसम्पादिता स्वकीये **ईस्थैटिक एक्सपीरियन्स एकोर्डिङ् टु अभिनवगुप्त** इत्याख्ये ग्रन्थे ।
2. स्वकीये **ईस्थैटिक** इत्याख्ये प्रसिद्धे ग्रन्थे क्रोचे इत्याख्येनापि मनीषिणा साक्षात्काराभिन्ना कल्पनैव काव्यं कला वेत्युक्तम् । यच्चान्यगोचरं तत्कलेवरं भौतिकोपादाननिर्मितं तद् आभ्यन्तरमूलस्य बाह्यं चिह्नमात्रम् । पुनश्च द्र. कौलिंगवुड., **प्रिन्सिपल्स ऑव आर्ट** (१९७५), पृ. १८६ प्र. २११ प्र.
3. तु. तेन समयापेक्षा वाच्यावगमनशक्तिरभिधाशक्तिः । तदन्यथानुपपत्तिसहायार्थाधीनशक्तिस्तात्पर्यशक्तिः । मुख्यार्थबाधादिसहकार्यपेक्षार्थप्रतिभासनशक्तिर्लक्षणाशक्तिः । तच्छक्तित्रयोपजनितार्थावगममूलजाततत्प्रतिभासपवित्रितप्रतिपत्तृप्रतिभासहायार्थद्योतनशक्तिर्ध्वननव्यापारः । स च प्राग्वृत्तं व्यापारत्रयं न्यक्कुर्वन् प्रधानभूतः काव्यात्मा ।" (**ध्वन्यालोकः**, पृ. ६२-६३, लोचनकारः)
4. द्र. मम **भक्तिदर्शनविमर्शः** पृ. १००-४.
5. **माण्डूक्योपनिषद्भाष्ये** शङ्कराचार्यविरचिते.
6. **रसगङ्गाधरः**, पृ. २९ प्र. : नव्यमतविवरणम्.
7. द्र. मम **साहित्य, सौन्दर्य और संस्कृति** (इलाहाबाद, १९९५), पृ. ६३ प्र.



# विशिष्टशब्दानुक्रमणी

# शुद्धिपत्रम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७ | १० | **मूल्यतत्त्वमीमांसायाम्** | **स्वकीयमूल्यतत्त्वमीमांसायाम्** |
| ७ | २५ | रूपणैव | रूपेणैव |
| ८ | ५ | काव्या | काव्य |
| १५ | १५ | मीमांसक | मीमांसा |
| १६ | २२ | लक्ष्यते, | लक्ष्यते |
| १८ | २० | संख्या | संख्या- |
| २० | १३ | लोकमर्यादा, | लोकमर्यादा |
| ३२ | पा. टि.४ | **फ्रेड्स** | **फेड्रस** |
| | पा. टि.५ | भूअर | मूअर |
| | पा. टि.१० | **मार्क्सिज्म** | **मार्क्सिज्म** |
| ३४ | २ | आकारदतिरिक्तं | आकारादतिरिक्तं |
| ४० | १३ | विवक्षितात् | विवक्षितत्वात् |
| ४१ | ३ | कारिकात्रुटिपूर्त्यर्थं निवेश्यम् | **प्रतीकं लक्षणं मूर्ती रचनाकार इत्यपि ।<br>लक्ष्यते रूपशब्दार्थश्चतुर्धा युगपर्ययात् ॥<br>(९ क)** |
| ४२ | पृष्ठारम्भे | कारिकात्रुटिपूर्त्यर्थं निवेश्यम् | **प्रातिरूप्यं क्वचिद्रूपे प्राहुः सद्व्याप्तिदर्शनात् ।<br>लक्षणाद् वा विभेदेऽपि रूपमौपाधिकं स्मृतम् ॥<br>(११ क)** |
| ४२ | ९ | कारिकात्रुटिपूर्त्यर्थं निवेश्यम् | **अग्निसूर्यादिरूपाणि प्रतीका वोपदेशतः ।<br>व्यञ्जयन्त्यतिरिक्तार्थं काव्यशिल्पादिसाम्यतः ॥<br>(११ ख)** |
| ५० | १५ | दुःखनित्य | दुःखानित्य |
| ५४ | ७ | वस्तुनि | वस्तुनः |
| ५४ | १० | शक्यः | शक्यम् |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५५ | ३ | एव | एवं |
| ५५ | ४ | एवं | एव |
| ५६ | ८ | **भिदा** | **भिदाः** |
| ५८ | २७ | -ण्युहरन्तीमं | -ण्युदाहरन्तीमं |
| ६० | ९ | कामरूपा | कामस्या |
| ७७ | ३ | मिभहिता | मभिहिता |
| ७९ | १(अधस्तात्) | आ. ३० | आइ. |
| ८३ | ७ | स्वद्यते | स्वाद्यते |
| ८४ | १९ | मन्वेष्टव्यम् । | मन्वेष्टव्यम् |
| ९० | ७ | **लौकिकक्व** | **लौकिकत्व** |
| ९२ | ६ | समञ्जसं मे | समञ्जसं |
| १०० | १७ | रागः | सा रागः |
| १०० | १७ | विशेषता | विशेषा |
| १०३ | ४ | वा । | वा, |
| १०४ | ६ | इत्यन्तःप्रज्ञः | इत्यन्तःप्रज्ञः । |
| १०५ | ११ | अनियतरुपा | अनियतरूपा |

●

